अथ

# श्रीभर्तृहरिकृतं

# नीति, शृंगार, वैराग्य,

नामकं

## शतकत्रयं संस्कृतटीकासमलंकृतं

भाषाटीकासमेतं च ।

मुम्बय्यां

'हरिप्रसाद भगीरथजी' इत्येषां पुस्तकालयस्याधिपतीनां

'व्रजवल्लभ हरिप्रसाद' इत्येतेषां कृते

'शंकर' इत्याख्ये मुद्रणालये मुद्रापितम् ।

पञ्चमावृत्तिः ।







शके १८३८, संवत् १९७३.

श्लोकः—श्रीमद्राजकुमोदिनीद्विजपतिः शार्दूलसिंहाभिधो
ब्रह्मण्यः क्षितिपालमौलिमुकुटालङ्कारशोभाप्रदः ।
तद्भ्राता च जवानसिंह इति यो विख्यातनामा भुवि
जीयेतां शरदां शतं नरपती तौ सिंहविक्रीडितौ ॥ १ ॥

दोहा—श्रीशोभाके पुंज बहु, शारदूल नृपराज ।
सिंह जवान सुजानिये, भ्राता उडुगणराज ॥ १ ॥

तद्राष्ट्रनिवासिना श्रीमद्वेदमार्गप्रतिष्ठानाचार्यपुष्करपीठस्थश्रीमन्निम्बार्काचार्य-श्रीघनश्यामशरणदेवाज्ञया तच्छिष्येण हरिप्रसादात्मजेन व्रजवल्लभशर्मणा मोहमय्याख्यपत्तने 'शंकर' इत्याख्ये मुद्रणालये मुद्रयित्वा प्रसिद्धिं नीतोऽयं ग्रन्थः ।

दोहा—परम रम्य मरुदेशमहँ, ग्राम सलेमाबाद ।
जन्मभूमि जाकी लसै, चहुँदिशि सदा अबाद ॥ १ ॥
प्रभुपदपङ्कजरजनिरत, धर्मधुरंधर धीर ।
व्रजवल्लभ हरिप्रसाद पै, करो कृपा रघुवीर ॥ २ ॥

---

पुस्तक मिलनेका ठिकाना—

## हरिप्रसाद भगीरथजीका पुस्तकालय.

कालकादेवीरोड, मुंबई.

हनुमान्दास व्रजवल्लभ पुस्तकालय, चौकमें,
कोतवालीके पास—कानपुर.

श्रीः ।

# अथ भर्तृहरिकृतं नीतिशतकं प्रारभ्यते ।

संस्कृत-भाषा-टीकाभ्यां समलंकृतम् ।

श्रीगणेशाय नमः ।

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकसाराय नमः शान्ताय तेजसे ॥ १ ॥

( संस्कृत-टीका ) विघ्नेशं विघ्नहर्तारं गणराजं गजाननम् । शारदां वरदां नौमि बुद्धिजाड्यापनुत्तये ॥ १ ॥ श्रीगोपालं नमस्कृत्य नत्वा गुरुपरंपराम् । भर्तृहरिकृतो ग्रन्थस्तस्य व्याख्यां करोम्यहम् ॥ २ ॥ ग्रंथादौ ग्रंथमध्ये च तथा ग्रंथसमाप्तये । मंगलाचरणं कार्यं शिष्यशिक्षाप्रवृत्तये ॥ ३ ॥ इति शिष्टाचारानुसंमतो यो ग्रन्थकारः, तेन कर्तुमिच्छितग्रंथस्य विघ्नध्वंसपूर्वकसमाप्तये नमनात्मकं मंगलं कृतम् । दिगिति—दशदिशासु तथा भूतभविष्यद्वर्तमानत्रिकालेषु अनवच्छिन्ना व्याप्ता अतएव अनन्ता नास्त्यंतो यस्याः सा चिन्मात्रा चिद्रूपा मूर्तिः स्वरूपं यस्य । तथा स्वानुभूतिः स्वस्यानुभवः स एव सारांशो यस्य तस्मै । तेजसे प्रकाशरूपाय । शांताय शांतस्वरूपाय भगवते ब्रह्मणे नमः । वृत्तमनुष्टुप् । तल्लक्षणं तु—श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ १ ॥

(भाषा—टीका) अथ भर्तृहरिकृत नीतिशतककी भाषाटीका प्रथम लिख्यते—दशों दिशा और त्रयकालादिमें परिपूर्ण अनंत चैतन्यमूर्ति केवल अपनेही अनुभवसे बोध होने योग्य शांत और तेजोमयरूप ईश्वरको नमस्कार है ॥ १ ॥

---

१ फलसाधनांशे भ्रांतिरहितत्वं शिष्टत्वम् ।

२ मंगलं तु तावत्त्रिविधम्, स्तुत्यात्मकं, वस्तुनिर्देशात्मकं, नमनात्मकं च ।

यां चिन्तयामि सततं मयि सा विरक्ता
साऽप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परितुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च ॥ २ ॥

( सं० टी० ) अथ कदाचित् समये कुतश्चिद्ब्राह्मणादायुर्वर्धकं जरारोगादिनाशकं किमपि फलं प्रजापालकेन भर्तृहरिणा लब्धम् । तद्राज्ञा स्वपत्न्यै दत्तं, अन्यपुरुषासक्ता सा अन्यस्मै दत्तवती, सोऽप्यन्यस्यै दत्तवान्, साऽपि तद्राज्ञे दत्तवती, तावत्पूर्वापरं तत्फलं दृष्ट्वा परं वैराग्यमापन्नो राजा आत्मसहितान् भार्यादीन्निंदति-यामिति । अहं यां स्वस्त्रियं सततं हृदि चिंतयामि साऽपि मयि विरक्ताऽस्ति । सा स्त्री अन्यं जनं जारपुरुषं प्रियतममिच्छति । स च जनः अन्यस्मिन् स्त्रीजने सक्तः । सा चास्मदर्थे काचिदन्या परितुष्यति संतोषं प्राप्नोति । एवं न कश्चित्कस्यचित्प्रियः । अतोऽस्मत्कृते या परितुष्यति तां धिक्, तं जनं जारपुरुषमपि धिक्, इमां मदीयां स्त्रियं मां च धिक् । सर्वमिदं मदनकृतमिति तं मदनमपि धिगित्यर्थः । वसंततिलकावृत्तम् । तल्लक्षणं तु-'उक्ता वसंततिलका तभजा जगौ गः' इति ॥२॥

( भा० टी० ) जिसकी मैं निरन्तर चिन्ता करता हूँ सो स्त्री मुझसे विरक्त होकर दूसरे जनकी इच्छा करती है, और वह जन अन्य स्त्रीपर आसक्त है और वह अन्य स्त्रीभी हमसे प्रसन्न है. इसलिये मेरी प्रियाको धिक्कार है, जो दूसरे जनको चाहती है; और दूसरा जन जो अन्य स्त्रीको चाहता है; और इस अन्य स्त्रीको, जो फिर मुझसे प्रसन्न है; और मुझे, जो इससे फसा हूँ और कामदेवकोभी धिक्कार है कि, जिसकी यह प्रेरणा है ॥ २ ॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रंजयति ॥ ३ ॥

( सं० टी० ) अस्मिंल्लोके अज्ञः, सुज्ञोऽल्पज्ञश्चेति त्रिविधा जनाः संति । तत्राद्यः सुखसाध्यः, द्वितीयो सुखतरमाराध्यः, तृतीयस्त्वसाध्य इत्याह-अज्ञ इति । न जानातीत्यज्ञः, मूर्ख इत्यर्थः । स च सुखं यथा स्यात्तथाऽऽराध्यः सेव्यः । यस्तु विशेषं युक्तायुक्तं जानातीति विशेषज्ञः । स सुखतरमतिसुखेनारा-

ध्यते । परंतु उभयोर्विलक्षणः किंचिज्ज्ञानलवेन दुर्विदग्धो गर्विष्ठस्तं नरं ब्रह्माऽपि चतुर्मुखोऽपि न रंजयति न साधयति, न वशीकरोति । तर्हि इतरेषां का वार्ता ? वृत्तमार्या । उक्तं च श्रुतबोधे–" यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पंचदश साऽऽर्या इति ॥ ३ ॥

( भा० टी० ) अज्ञानी सुखसे साधा जा सकता है और ज्ञानी अतिसुखसे; परंतु अल्पज्ञ नरको ब्रह्माभी नहीं साध सकते हैं ॥ ३ ॥

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रांकुरात्
समुद्रमपि संतरेत् प्रचलदूर्मिमालाकुलम् ।
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४ ॥

( सं० टी० ) द्वाभ्यां श्लोकाभ्यां सदृष्टांतं मूर्खजनचित्ताराधनमशक्यमिति विशदयति–प्रसह्येति । मकरो नाम झषविशेषस्तस्य वक्त्रे दंष्ट्रांकुरस्तस्मिन्मणिः, स मणिः प्रसह्य बलात्कारेण निष्कासितुं शक्यो भवेत् । तथा च प्रचलंतीनामूर्मीणां लहरीणां मालाः समुदायास्तैराकुलं समुद्रमपि बाहुभ्यां संतरेत् । तथा च कोपितं भुजंगं सर्पं शिरसि पुष्पवद्धारयेत् । एते अघटिता दृष्टांताः कालेन भविष्यंति, परंतु प्रतिनिविष्ट आविष्टचित्तः तस्य मूर्खजनस्य चित्तं नाराधयेत्, न साधयेदित्यर्थः । छंदः पृथिवी–' जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ' इति लक्षणम् ॥ ४ ॥

( भा० टी० ) मनुष्य, बलात्कारसे मगरके मुखके डाढ़ोंकी नोकमेंसे मणिको निकाल सकता है और चंचल तरंगोंसे भरेहुए समुद्रको परैके पार हो सकता है और क्रोधित सर्पको फूलकी नाई सिरपर धर सकता है; परंतु मूर्खका चित्त, जो असत् वस्तुमें लगा हुआ है, उसे कोई नहीं बिलगा सकता है ॥ ४ ॥

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटञ्छशविषाणमासादयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५ ॥

( सं० टी० ) लभेतेति—सिकतासु वालुकासु तैलं यत्नतः प्रयासेन पीडयन् सन् कदाचिल्लभेत । तथा च पिपासार्दितः तृषार्तः मृगतृष्णिकासु मृगजलेषु सलिलमुदकं कदाचित्पिबेत् । कदाचित् पृथ्वीं पर्यटन् सन् शशस्य विषाणं शृङ्गं प्राप्नुयात् । एवमघटितघटनं भविष्यति, परंतु प्रतिनिविष्टमूर्खजनस्य चित्तं न आराधयेत् । छंदः पूर्वोक्तः ॥ ५ ॥

( भा० टी० ) यदि यत्नसे पेरे तो बालूमेंभी तेल पावे और मृगतृष्णामें प्यासा कदाचित् जलभी पी सके और ढूंढ़नेसे खरहेका सींगभी मिल सके; परंतु मूर्खका चित्त जो असत् वस्तुमें लगा है उसे कोई नहीं भिन्न कर सकता है ॥ ५ ॥

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
छेत्तुं वज्रमणीन् शिरीषकुसुमप्रान्तेन सन्नह्यते ।
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यंदिभिः ॥६॥

( सं० टी० ) खलानां सन्मार्गे प्रवृत्तिरतिदुर्लभा इत्याह—व्यालमिति । यः खलान् दुर्जनान् सतां पथि मार्गे सुधास्यंदिभिः सुधास्यंदनशीलैः अमृततुल्यैः सूक्तैर्वाग्भिर्नेतुं वांछति असौ व्यालं दुष्टगजम् । 'व्यालो दुष्टगजे सर्पे' इति मेदिनी । बालमृणालतंतुभिः कोमलकमलबिसतंतुभी रोद्धुमवरोद्धुं वाञ्छति । तथा च वज्रमणीन् हीरकमणीन् ' वज्रोऽस्त्री हीरके पवौ ' इत्यमरसिंहः । शिरीषकुसुमप्रांतेन शिरीषपुष्पाग्रेण छेत्तुं सच्छिद्रीकर्तुं समुज्जृंभते सन्नद्ध उद्युक्तो भवति । तथा च क्षारांबुधेः क्षारसमुद्रस्य मधुबिंदुना माक्षिकबिंदुना । ' मधु क्षौद्रं माक्षिकादि ' इत्यमरः । माधुर्यं कर्तुमीहते चेष्टते । एतानि अघटितानि कर्तुमिच्छतीत्याश्चर्यम् । एवं च सन्मार्गे सतां प्रवृत्तिर्दुर्बोधा इति भावः । वृत्तं शार्दूलविक्रीडितम्–'सूर्याश्वैर्यदिमः सजौ सततगाः शार्दूलविक्रीडितम् ' इति लक्षणम् ॥ ६ ॥

( भा० टी० ) वह मनुष्य कोमल कमलकी डाँड़ीके सूतसे हाथीको बांधा चाहता है और सिरिसके फूलकी पांखुरीसे हीरेको बेधा चाहता है और खारे समुद्रको एक बूंद मधु(सहद)से मीठा किया चाहता है, जो खलोंको अपने अमृतसमान उपदेशसे सन्मार्गमें लानेकी इच्छा करता है ॥ ६ ॥

स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥७॥

( सं० टी० ) संप्रति अज्ञजनाज्ञतायाः छादनोपायमाह–स्वायत्तमिति । विधात्रा ब्रह्मणा अज्ञतायाः मौर्ख्यस्य छादनमावरणं मौनं विनिर्मितं उत्पादितम् । कथंभूतं मौनम् ? स्वस्यात्मनः आयत्तमधीनम् । 'अधीनो निघ्न आयत्तः' इत्यमरः । पुनः कथंभूतम् ? एकांताः गुणाः उत्कर्षाः यस्मिंस्तत् एकांतगुणम् । तन्मौनं विशेषतः विशेषेण सर्वं विदंति ते सर्वविदस्तेषां समाजे समूहे । पंडा सदसद्विवेका धीर्येषां ते पंडिताः । न पण्डिताः अपंडिताः । तेषां विभूषणं विनिर्मितं भवति । लोके अज्ञजनस्य अज्ञानावरणे मौनं विना उपायो नान्य इति भावः । वृत्तमिंद्रवज्रा–'स्यादिंद्रवज्रा यदि तौ जगौ गः' इति ॥ ७ ॥

( भा०टी० ) मौन अर्थात् 'चुप रहना' यह एक तो अपने आधीन है तथा औरभी इसमें अनेक गुण हैं. विधाताने इसको अज्ञानताका ढकना बनाया है, और विशेषकरके सर्वज्ञोंकी सभामें मूर्खोंका भूषण यही मौन है ॥ ७ ॥

यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ८ ॥

( सं० टी० ) अल्पज्ञानमात्रादेव सर्वज्ञोऽस्मीति गर्वो भवति विशेषज्ञानात्तन्निवृत्तिरिति स्वदृष्टांतेनाह–यदेति । यदा यस्मिन्काले किंचिज्ज्ञोऽहं, तदा द्वाभ्यां शुंडातुंडाभ्यां पिबतीति द्विपो गजः । स यथा मदेन मदजलेनांधो विचाररहितो भवति तथाऽहं किंचिज्ज्ञत्वमदेनांधो कर्तव्याकर्तव्यानुसंधानरहितो समभवं जातः । तदा मम मनः सर्वं सकलं जानातीति सर्वज्ञोऽस्मीति अवलिप्तं गर्विष्ठमभवत् । तदुपरि यदा बुधजनस्य पंडितस्य सकाशादवगतं प्राप्तं शास्त्रादिकं ज्ञानं तदा मूर्खोऽस्मीति ज्ञानं भवति । ततः मे मदः गर्वः ज्वर इव व्यपगतः नष्टो भवति । यथा औषधसेवनया ज्वरो गच्छति, तथा विद्वज्जनसकाशात्प्राप्तज्ञानेन सर्वज्ञत्वाभिमानो नष्ट इति भावः । शिखरिणीवृत्तम्–'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति उक्तम् ॥ ८ ॥

( भा० टी० ) जब मैं अल्पज्ञ रहा तब हाथीकी नाईं मदांध था और मेरे मनमें ऐसा गर्व हुआ कि, मैं सर्वज्ञ हूं और जब मुझे पण्डितोंके सकाशसे कुछ कुछ ( ज्ञान ) प्राप्त हुआ, तब मैंने अपनेको मूर्ख जाना और मेरा मद ज्वरकी नाईं उतर गया ॥ ८ ॥

कृमिकुलचितं लालाक्लिन्नं विगंधि जुगुप्सितं
निरुपमरसं प्रीत्या खादन्नरास्थि निरामिषम् ।
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ९ ॥

( सं० टी० ) क्षुद्रेषु विषयेषु आसक्तं जनं श्वदृष्टांतेन निन्दति–कृमिकुलचितमिति । यथा श्वा कृमिकुलैश्चितं युक्तं व्याप्तं, लालया क्लिन्नं आर्द्रम् । 'आर्द्रं सार्द्रं क्लिन्नम्' इत्यमरः । विगंधि दुर्गंधियुतमत एव जुगुप्सितं निंद्यं निरामिषं मांसरहितं नरास्थि मनुष्यास्थि । निर्गता उपमा यस्य एतादृशो यो रसः तं प्रीत्या प्रीतिपूर्वकं खादन् भुंजन् श्वा शुनकः । 'शुनको भषकः श्वा स्यात्' इत्यमरः । पार्श्वस्थं समीपस्थं सुरपतिमिंद्रमपि विलोक्य न शंकते न लज्जते । हि यस्मात् क्षुद्रो नीचो जंतुः प्राणी परिग्रहस्य फल्गुतां न गणयति न मनुते । स लोकनिंदितमतितुच्छमपि कर्म करोतीत्यर्थः । हरिणीवृत्तम्–'रसयुगहयैन्सौं म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् ॥ ९ ॥

( भा०टी० ) कीड़ोंके समूहसे भरा, लारसे भीगा हुआ, दुर्गंध भराहुआ, निंदित, नीरस और निर्मांस मनुष्यके हाड़को निर्लज्ज श्वान प्रीतिपूर्वक खातेसमय इंद्रकोभी अपने पास खड़े हुए देखकर शंका ( लाज ) नहीं करता, इससे यह सिद्ध हुआ कि, क्षुद्र जीव जिस वस्तुको ग्रहण करता है उसकी स्वच्छतापर ध्यान नहीं करता ॥ ९ ॥

शिरः शार्वं स्वर्गात्पतति शिरसस्तत्क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अधो गङ्गा सेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ १० ॥

( सं० टी० ) उत्तमपदाद्भ्रष्टः पुरुषोऽधः पतति । तस्य न पुनरुच्चपदप्राप्तिरिति गंगादृष्टांतेनाह-शिर इति । स्वर्गात् गंगा विष्णुपादोदकमादौ शार्वं शर्वो महादेवस्तस्येदं शार्वं शिरो मस्तकं तं पतति, तत्पश्चात् क्षितिधरं हिमालयपर्वतं पतति । उत्तुंगादत्युच्चात् महीं धारयतीति महीध्रः पर्वतस्तस्मात् अवनिं भूमिमागता । सा गंगा अवनेः पृथिव्या अपि जलधिं समुद्रं पतति । एवं क्रमेणेयं अधोधःस्तोकमल्पं पदमुपगता । अथवा विवेकभ्रष्टानां विचारशून्यानां शतमनेकानि मुखानि यस्य स एतादृशो विनिपातः विशेषेण पतनं नीचस्थितिः भवति । यथा गंगा शिवमस्तकं प्रत्यायाता । इतःपरं योग्यं स्थानं नास्तीति किं मनसि विचार्य क्रमेणाधोधः नीचपदमुपगता । तथा विचारभ्रष्टाः पुरुषाः सर्वतो प्रकारेण नीचत्वं प्राप्नुवंति । तेषां नोत्तमपदप्राप्तिरिति भावः । शिखरिणीवृत्तम्, लक्षणं तूक्तमेव ॥ १० ॥

( भा० टी० ) यह गंगा पहिले स्वर्गसे शिवजीके मस्तकपर गिरी. फिर वहाँसे ऊँचे पर्वतपर और पर्वतसे पृथ्वीपर और पृथ्वीसे समुद्रमें; यों क्रमसे नीचेही नीचे तुच्छ स्थानोंमें गिरती गई. तैसे विवेकभ्रष्ट लोगभी सर्वदा सौ सौ प्रकारसे गिरतेही जाते हैं ॥ १० ॥

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो
नागेन्द्रो निशितांकुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ११ ॥

( सं० टी० ) सर्वरोगनिरसनोपायः लोके शास्त्रे च प्रतिपादितः । परंतु मूर्खस्य नास्त्यौषधोपाय इत्याह-शक्य इति । हुतं हविरादि भुंक्ते अत्ति इति हुतभुगाग्निः । 'हिरण्यरेता हुतभुक्' इत्यमरः । जलेन वारिणा वारयितुं निवारयितुं शक्यः । तथा सूर्यस्यातप उष्णत्वं छत्रेण । तथा समदो गजस्तीक्ष्णांकुशेन । गौश्च गर्दभश्च तौ दंडेन लगुडेन 'दंडोऽस्त्री लगुडेपि स्यात्' इत्यमरः । व्याधी रोगः भेषजस्यौषधस्य संग्रहैः सेवनैः । तथा च विषं विविधैरनेकमांत्रिकयोगैः वारयितुं शक्यते । सर्वस्य शास्त्रविहितमौषधमस्ति, परंतु लोके वा शास्त्रे मूर्खस्यौषधं नास्तीति भावः । मूर्खत्वनाशोपायो नास्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तु पूर्वमेवोक्तम् ॥ ११ ॥

( भा० टी० ) जलसे अग्निका निवारण हो सकता है, छातेसे धूपका, तीखे अंकुशसे उन्मत्त हाथीका, दंडसे दुष्ट बैल और गदहेका, नानाप्रकारकी औषधियोंसे व्याधियोंका और मंत्रयोगसे विषका. यों शास्त्रकी विधिसे सबकी औषध है, परंतु मूर्खकी औषध नहीं हो सकती ॥ ११ ॥

साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः ।
तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम् ॥ १२ ॥

( सं० टी० ) यः साहित्यसंगीतादिविहीनः पुरुषः स पशुरेवेत्याह-साहित्येति । साहित्यं काव्यालंकारादि, संगीतं गानादि, कला शिल्पादि । एतैर्यो विहीनो हीनः । पुच्छं लांगूलं विषाणं शृंगं ताभ्यां हीनो रहितः । 'पुच्छोऽस्त्री लूमलांगूले-अतस्त्रिषु विषाणं स्यात्' इत्यमरः । स पुरुषः साक्षात्पशुरेव । सर्वे पशवः तृणं भक्षयंति, तर्हि कुतो नायं खादतीति चेदाह-तृणमिति । तृणं न खादन् भक्षन्नपि जीवमानः इदं तु पशूनां परममुत्कृष्टं भागधेयमदृष्टम् । नो चेत्तेषां तृणाद्यभावाज्जीवनमपि दुर्लभमिति भावः । तस्मात् मनुष्यमात्रेण शास्त्रादिकमवश्यमाकलनीयमिति तु तात्पर्यम् । वृत्तमुपजातिः । तदुक्तं वृत्तरत्नाकरे-'अनंतरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । इत्थं किलान्यास्वपि मिश्रितासु वदंति जातिष्विदमेव नाम इति ॥ १२ ॥

( भा० टी० ) साहित्य और संगीतशास्त्रकी कलासे जो मनुष्य हीन है वह पूंछ और सींगरहित साक्षात् पशु है; 'तृण नहीं खाता और जीता है; यह पशुओंका परम सौभाग्य है'! ॥ १२ ॥

येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः ॥
ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ १३ ॥

( सं० टी० ) येषां विद्यादिधर्मो नास्ति तेषां पशुभूतानां मनुष्यरूपेण पृथिव्यां संचरणमित्याह-येषामिति । येषां विद्या व्याकरणन्यायमीमांसादि न नास्ति । तपो व्रतोपवासादि न । दानं गवादि न । ज्ञानं शास्त्रीयं लौकिकं च न । शीलं सद्वृत्तं न 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । गुणो सत्वादिः न । धर्मः सदाचरणादि न । ते मृगाः पशुभूताः । 'मृगः पशौ कुरंगे' इति मेदिनी । भुवि भारभूताः मनुष्याः मर्त्यलोके मनुष्यरूपेण चरंति विद्यादिहीनानां

जीवित्वं पशुसमानमिति भावः । एवंच पशुत्वनिरसनार्थं विद्यादिकं ज्ञानं संपादनीयमिति सूचितम् । वृत्तं पूर्वोक्तम् ॥ १३ ॥

( भा० टी० ) जिनको विद्या, तप, दान, शील, गुण और धर्म नहीं, वे मृत्युलोकमें पृथ्वीको भाररूप होकर मनुष्यके स्वरूपसे साक्षात् पशुही विचरते हैं! ॥ १३ ॥

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ।
न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि ॥ १४ ॥

( सं० टी० ) पर्वते मृगैः सह सहवासः श्रेष्ठः । परंतु स्वर्गेऽपि मूर्खजनसंपर्को नोचित इत्याह–वरमिति । पर्वतदुर्गेषु वनचरैर्व्याघ्रादिभिः सह भ्रमणं वरमुत्कृष्टम्, परंतु मूर्खजनसंपर्कः इंद्रभवनेष्वपि मास्त्विति । स संपर्को सर्वथा त्याज्य इति भावः । वृत्तमनुष्टुप् ॥ १४ ॥

( भा० टी० ) पर्वत और वनमें वनचरोंके संग भ्रमण करना अच्छा है; परंतु मूर्खजनका संसर्ग इंद्रभवनमेंभी बुरा है ॥ १४ ॥

इत्यज्ञनिंदाप्रकरणम् ।

---

शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।
तज्जाड्यं वसुधाधिपस्य कवयो ह्यर्थं विनाऽपीश्वराः
कुत्साः स्युः कुपरीक्षका हि मणयो यैरर्घतः पातिताः॥१५॥

( सं० टी० ) अथ विद्वत्प्रशंसा । यस्य प्रभोः विषये कवयो निर्धनाः संति, स राज्ञो दोष इति मणिन्यायेनाह–शास्त्रेति । व्याकरणाभिधानादिभिः शास्त्रैरुपस्कृताः शिक्षिताः शब्दास्तैः सुंदरा गीर्वाणी येषां ते । तथा च शिष्येभ्यः प्रदेया दत्ताः पाठिताः आगमा वेदशास्त्राणि यैस्ते । तथा च सर्वलोकेषु विख्याताः प्रसिद्धाः कवयः कवित्वं कुर्वाणाः । एवंभूताः विद्वांसो यस्य प्रभोर्विषये देशमध्ये वसंति । अथ च निर्धना धनरहिताः । राजा तान्नैव जानाति तेषां परामर्श न गृह्णाति, तत् वसुधाधिपस्य राज्ञो जाड्यं मौर्ख्यम् । कवयस्तु सुधियस्तु अर्थं विनाऽपीश्वराः समर्थाः । तत्र दृष्टांतः–यथा महामणयो बहुमूल्यास्ते कुपरीक्षकैः कुत्सितपरीक्षकैः अज्ञात्वा अर्घतो मूल्यतः

पातिताः न्यूनमूल्याः कृताः । तर्ह्ययं दोषः परीक्षकाणां, न मणीनाम् । परीक्षकाः कुत्साः स्युः कुत्सिता एव, न तु मणयः । एवं मणिमूल्यं यथार्थमजानंतः कुपरीक्षकाः यथा निंद्यास्तथा पूर्वोक्तकवीनां स्वरूपमजानंतो भूपतयोऽपि निंद्या इत्यर्थः । इति सत्यैश्वर्ये राज्ञा कवयो अवश्यं सम्माननीया इति भावः । वृत्तं शार्दूलविक्रीडितम् । लक्षणं तु कथितमेव ॥ १५ ॥

( भा० टी० ) शास्त्रोक्त शब्दोंसे जिनकी वाणी सुंदर है और शिष्योंके पढ़ानेयोग्य जिनको विद्या है और वे आपभी प्रसिद्ध हैं, ऐसे कवि जिस राजाके देशमें निर्धन रहते हैं, यह जड़ता राजाहीकी है; क्योंकि, कविलोग तो विना द्रव्यकेभी श्रेष्ठही होते हैं. जैसे जिन्होंने मणियोंका मोल घटाया वे परीक्षा करनेवालेही खोटे हैं, किन्तु मणियां खोटी नहीं हैं ॥ १५ ॥

हर्तुर्याति न गोचरं किमपि शं पुष्पाति यत् सर्वदा
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पांतेष्वपि न प्रयाति निधनं विद्याख्यमंतर्धनं
येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ १६ ॥

( सं० टी० ) संप्रति राज्ञा कवयः संमाननीयाः, नत्वहंकारेण निर्भत्सनीया इति विद्याख्यधनप्रशंसापूर्विकां नीतिं श्लोकयुगलेनाह—हर्तुरिति । भो नृपाः राजानः ! येषां विद्याख्यमंतर्धनं वर्तते तान्प्रति मानमहंकारमुज्झत त्यजत । कथंभूतं विद्याख्यं धनम् ? हर्तुस्तस्करस्य यद्गोचरं न याति तस्य दृश्यं न भवति । पुनः कथंभूतम् ? किमप्यनिर्वचनीयं शं सुखं पुष्णाति पुष्टिं प्रापयति । पुनः कथंभूतम् ? सर्वदा सर्वकालेष्वपि अर्थिभ्यः शिष्येभ्यः प्रतिपाद्यमानं दत्तं परामुत्कृष्टां वृद्धिं प्राप्नोति । पुनः कल्पान्तेष्वपि निधनं नाशं न प्रयाति न प्राप्नोति । एतादृशं येषामंतर्धनं तैः सह कः स्पर्धते स्पर्धां करोति । पूर्वोक्तं वृत्तम् ॥ १६ ॥

( भा० टी० ) जो चुरानेवालेको नहीं देख पड़ता और सदा सुखकी वृद्धि करता है और निरंतर याचकों ( शिष्यों ) को दिया जाय तो परम वृद्धिको प्राप्त होता है और कल्पांतमेंभी जिसका नाश नहीं ऐसा विद्यारूपी

अंतर्धन जिनके पास है तिनसे हे राजालोगो ! तुम अभिमान छोड़ दो; क्योंकि, उनके समान जगत्में दूसरा कौन है ? अर्थात् कोई नहीं ॥ १६ ॥

अधिगतपरमार्थान् पण्डितान् मावमंस्था-
स्तृणमिव लघु लक्ष्मीर्नैव तान् संरुणद्धि ।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ १७ ॥

( सं०टी० ) अधिगतेति । अधिगतः प्राप्तः परमार्थो यैस्तान्प्रति मावमंस्थाः तेषामपमानं मा कुरु । तान्प्रति लक्ष्मीः लघुतृणमिव लक्ष्मीस्तान्नैव संरुणद्धि रोद्धुं न शक्नोति । अत्र दृष्टांतः । अभिनवा सुंदरा मदजललेखा परंपरा तया श्यामायमानानि गण्डस्थलानि येषां ते । एवंभूतानां वारणानां गजानां बिसतंतुः कमलकेसरतंतुः किं वारणं भवति रोद्धुं शक्नोति ? अतः पण्डितानामवज्ञा न कर्तव्येत्यर्थः । मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणम् ॥ १७ ॥

( भा० टी०) जिनको परमार्थ अर्थात् मोक्षपर्यंतका साधन प्राप्त है, ऐसे पंडितोंका अपमान मत करो; क्योंकि, उनको तुम्हारी तृणके समान लघु लक्ष्मी न रोंक सकेगी. जैसे नवीन मदकी धारासे शोभित श्याम-मस्तकवाले मत्त हाथीको कमलकी डाँडीका सूत नहीं रोंक सक्ता ॥ १७ ॥

अम्भोजिनीवननिवासविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १८ ॥

( सं० टी० ) औपाधिकगुणनिवर्तको लोकः समर्थः, परं स्वाभाविकगुणं निवर्तयितुं न कोऽपि समर्थ इति हंसदृष्टांतं दर्शयन्नाह-अम्भोजिनीति । यो यस्य स्वाभाविकः सद्गुणस्तं गुणं न कोऽपि हर्तुं शक्नोति । अत्र दृष्टांतः । अंभसो जाताः कमलिन्यस्तासां वनं तत्र निवासो वसतिस्थानं तेन विलसदंभः एतादृशं हंसस्य विलासम् । विधाता ब्रह्मा नितरामत्यंतं कुपितश्चेद्विलासमेव

हंति । न तु दुग्धजलयोर्भेदविधौ या प्रसिद्धा वैदग्ध्यं स्वभावः चातुर्यं तस्य कीर्तिः तां हर्तुं समर्थः । तर्हि इतरेषां का वार्ता ? वसंततिलकावृत्तम् । लक्षणं पूर्वोक्तम् ॥ १८ ॥

( भा०टी० ) हंसपर यदि विधाता कोप करे तो उसका कमलवनमें निवास और वहांका विलास नष्ट कर सक्ता है, परंतु उसके दूध और जल बिलगानेकी प्रसिद्ध पांडित्यकी कीर्तिका विधाताभी नहीं नाश करसक्ता ॥ १८ ॥

केयूरा न विभूषयंति पुरुषं हारा न चंद्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः ।
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते
क्षीयंते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १९ ॥

( सं०टी० ) केयूराद्यलंकारेभ्यो वागलंकारः श्रेष्ठः, सोऽवश्यं संपादनीय इत्याह–केयूरेति । केयूरा बाहुभूषणानि । चंद्रवदुज्ज्वला मुक्ताफलानां हाराः । शुद्धं स्नानं विलेपनं गंधादिकं कुसुमं पुष्पं च । अलंकृताः सज्जीकृता धूपिता मूर्धजाः केशाः । एते पदार्थाः पुरुषं न भूषयंति । यदा मौर्ख्यं पुरुषस्यास्ति तदेभिः किं भूषणं भवति । तर्हि किम् ? एका वाक् सम्यक् प्रकारेण अलंकरोति शोभयाति । साऽपि वाक् या संस्कृता छंदोव्याकरणादिसंस्कारयुक्ता पुरुषेण धार्यते । सकलविभूषणानि क्षीयंते, एकं वाग्भूषणं न क्षीयते, अतः सततं सार्वकालं वाग्भूषणमेव भूषणम् । वाण्या विना भूषणं नान्यदिति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम ॥ १९ ॥

( भा० टी० ) केयूर ( बजुल्ले ) और चंद्रमाके समान उज्ज्वल मोतियोंके हार, स्नान, चंदन, लेपन, फूलोंका शृङ्गार और सुधारे हुए केशादि ये सब पुरुषोंको भूषित नहीं कर सक्ते; किन्तु केवल वह वाणी जो संस्कारयुक्त धारण की गई हो सोही पुरुषको भूषित कर सक्ती है. और सब भूषण अवश्य क्षय हो जाते हैं; परंतु केवल वाणीहीका भूषण निरंतर वर्तमान रहता है ॥ १९ ॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बंधुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूजिता न हि धनं विद्याविहीनः पशुः ॥ २० ॥

( सं० टी० ) विद्यैव नरस्य अधिकं रूपमस्ति, तद्विहीनो नरः पशुरेवेत्याह–विद्येति । पुरुषस्य विद्याव्यतिरिक्तं यद्धनं तद्धनं न भवति । तत्क्षीयते तस्करादिभिर्नीयते गोप्यं न भवति । अतो विद्या नाम धनं तत्समीचीनं बहुगुणम् । कथंभूतं विद्याख्यं धनम्? नरस्याधिकं रूपं करोति । तथा च प्रच्छन्नं गुप्तं धनं भवति । विद्या भोगकरी भोगान् करोति यशः कीर्तिं सुखं च करोति । विद्या गुरूणां गुरुः, क्षुद्रगुरवः सर्वविद्यासंपूर्णं प्राज्ञं प्रत्युपायांति । स प्राज्ञः गुरूणामपि गुरुः । अथ च गृणाति हितमुपदिशतीति गुरुरिति गुरुपदव्याख्यानमतो हितकर्त्री विद्यैव । विदेशगमने विद्या बंधुजनः विदेशे ये जनास्ते विद्यया बंधुजना एव भवंति । विद्या परं दैवतम् । राजसु पूजिता येषां विद्या ते राज्ञां सभायां पूजिता भवंति, तथा धनाढ्याः पूजिता न भवंति । अतो विद्याविहीनो यः सः पशुरेव । तस्मात्पुरुषमात्रेण पशुत्वनाशाय विद्यैवावर्गंतव्येति फलितम् । वृत्तं पूर्वोक्तमेव ॥ २० ॥

( भा० टी० ) विद्यारूपी वस्तु मनुष्यका अधिकरूप और छिपाहुआ अंतर्धन है और विद्याही भोग, यश और सुखको संपादन करनेवाली और गुरुओंकी गुरु है, परदेशमें विद्याही बंधुजन है, और विद्याही परम देवता है और विद्याही राजालोगोंमें पूज्य है; धन नहीं पूजित है. इसलिये विद्याविहीन नर पशु है ॥ २० ॥

क्षांतिश्चेद्वचनेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् ।
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्याऽनवद्या यदि
व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥ २१ ॥

( सं० टी० ) क्षांत्यादिगुणयुक्तपुरुषस्यैतरैर्निंद्यवचनादिभिः किं प्रयोजनमित्याह–क्षांतिरिति । देहिनां प्राणिनां यदि क्षांतिः क्षमा चेद्वर्तते तदा

सांत्ववचनेन किं प्रयोजनम् । तथा च क्रोधोऽस्ति तर्हि आरिभिः शत्रुभिः किम् । ज्ञातिश्चेदनलेनाग्निना किम् । 'दायादाः सहजाऽरयः' इति वर्तते । ज्ञातयो यदा निंदादिपरुषं वदंति तेनैव दाहो भवति अग्नेः किं प्रयोजनम् । यदि सुहृत्सखा वर्तते तदा दिव्यौषधैः किं फलं प्रयोजनम् । स सुहृत्सर्वहितं करोति । यदि दुर्जनाः संति तदा सर्पैः किम् । सर्पाः दंशविषेण मारयंति तथा दुर्जना अपि छिद्रान्वेषणेन मारयंति । यदि अनवद्या सुंदरा संपूर्णा विद्याऽस्ति तदा धनैः किम् । यदि व्रीडा लज्जा असत्कर्मसु वर्तते तदा तदेव भूषणम् । इतरभूषणैः किम् । यदि सुकविता चातुर्यमस्ति तदा राज्येन किम् । वृत्तं पूर्वोक्तमेव ॥ २१ ॥

(भा० टी०) यदि क्षमा हो तो शांतिवचनका क्या काम है ? और जिस मनुष्यमें क्रोध है तो उसे शत्रुकी क्या आवश्यकता है ? यदि जाति है तो उसे अग्निका क्या प्रयोजन है ? और जो अपने इष्टमित्र समीप हैं तो दिव्य औषधियोंसे क्या फल है ? और जिसके दुर्जन विद्यमान हैं उसका सर्प और अधिक क्या करेंगे ? और जिसके निर्दोष विद्या है उसे धनसंचयसे क्या होगा ? और जिसे लज्जा है उसे फिर और भूषण क्या है ? और जिसकी सुन्दर कविता है उसके आगे राज्य क्या है ? ॥ २१ ॥

दाक्षिण्यं स्वजने दया परजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जनेष्वार्जवम् ।
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ २२ ॥

(सं० टी०) लोकस्थितिमाह—दाक्षिण्यमिति । स्वजने भार्यापुत्रादौ दाक्षिण्यं सारल्यम् । 'दक्षिणे सरलोदारौ' इत्यमरः । परजने अन्यजने दया कृपा 'कृपा दयाऽनुकंपा स्यात्' इत्यमरः । दुर्जने पिशुनजने सदा निरंतरं शाठ्यं वंचकत्वम् । साधुजने प्रीतिः । नृपजने नयो न्यायः । विद्वज्जनेषु पंडितजनेष्वार्जवमृजुत्वम् । शत्रुजने शौर्यं शूरत्वम् । गुरुजने मान्यजने क्षमा क्लेश-

सहनम्। नारीजने स्त्रीजने धूर्तता दक्षत्वम्। एवमनेन प्रकारेण ये पुरुषाः कलासु कुशला निपुणास्तेष्वेव लोकानां स्थितिर्मर्यादापालनम्। सर्वे लोकाः तद्गुणानुरोधेन वर्तंत इति मंतव्यम्। पूर्वोक्तं वृत्तम् ॥ २२ ॥

(भा० टी०) अपने कुटुंबके विषे उदारता, परजनपर दया, दुर्जनसे सदा शठता, साधुओंसे प्रीति, राजसभामें नीति, पण्डितोंसे सुधाई, शत्रुजनोंमें शूरता, बड़े लोगोंसे क्षमा और स्त्रियोंसे धूर्तता करना, जो पुरुष इसभांति इन सब कलाओंमें निपुण हैं, तिन्होंमेंही लोकाचारकी स्थिति है ॥२२॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥ २३ ॥

(सं०टी०) सत्पुरुषाणां संगतिर्बुद्धेर्जाड्यहरणादिकं सकलं करोतीत्याह—जाड्यमिति। सतां साधुजनानां संगतिः समागमः धियः बुद्धेर्जाड्यं मांद्यं हरति नाशयति। वाचि सत्यत्वं सिंचति। मानस्य संमानस्योन्नतिं दिशति ददाति। पापमपाकरोति दूरीकरोति। चेतश्चित्तं प्रसादयति प्रसन्नतां नयति। दिक्षु दिशासु कीर्तिं विस्तारयति। एवं च सत्संगतिः पुंसां किं किं न करोतीति कथय वद। अपितु सा सर्वान् कामान् साधयतीति बोद्धव्यम्। वसंततिलकावृत्तम्—लक्षणं पूर्वमेवोक्तम् ॥ २३ ॥

(भा० टी०) जो बुद्धिकी जड़ताको हरती, वाणीमें सत्यको सींचती, मानको बढ़ाती, पापको दूर करती, चित्तको प्रसन्न रखती, और दिशाओंमें कीर्तिको विस्तृत करती है. कहो तो यह सत्संगति पुरुषको क्या क्या नहीं करती है ? ॥ २३ ॥

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ २४ ॥

(सं० टी०) इदानीं रससिद्धाः कवीश्वराः सर्वोत्कर्षेण वर्तंत इत्याह—जयंतीति। रसेषु शृङ्गारादिषु सिद्धाः सिद्धिमंतः, परिपूर्णा इत्यर्थः। ते कवी-

श्वराः कविश्रेष्ठाः सुकृतिनः धन्याः संतः 'सुकृती पुण्यवान् धन्यः' इत्यमरः । जयंति सर्वोत्कर्षेण वर्तंते । ते के ? येषां यशःकाये कीर्तिरूपदेहे जरा च मरणं च ताभ्यां जातं भयं भीतिः नास्ति । एवं च कवीनां शृंगारादिरसमिश्रितनानाविधाऽऽख्यायिकाकाव्यरचनोत्पन्नं यशः न नश्यतीत्यर्थः । वृत्तमनुष्टुप् । लक्षणं तु पूर्वमेवोक्तम् ॥ २४ ॥

( भा० टी० ) ऐसे पुण्यवान् कवीश्वर सदाहीं उत्कृष्टतासे वर्तते हैं, कि, जो रससिद्धको पाये हैं; क्योंकि उनके यशरूपी शरीरमें जरामरणका भय नहीं है ॥ २४ ॥

सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः
स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः ।
आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं
तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिना ॥ २५ ॥

( सं० टी० ) भगवत्प्रसादादेव पुत्रादयः सच्चरितादियुक्ता भवंतीत्याह— सूनुरिति । सूनुः पुत्रः सच्चरितः सद्वृत्तः । अतिशयेन प्रिया प्रियतमा सती साध्वी 'सती साध्वी पतिव्रता' इति कोशः । स्वामी पोषकः प्रसादे प्रसन्नतायामूर्ध्वं मुखं यस्य । स्निग्धं स्नेहयुक्तं मित्रम् । अवचंकः परिजनः स्वकीयजनसमुदायः । निःक्लेशलेशमाधिरहितं स्वस्थं मनः । आकारो रुचिरः । स्थिरश्च विभवः सामर्थ्यम् । विद्ययाऽवदातं शोभितं मुखमिति । एते पदार्थाः विष्टपहारिणि स्वर्गवासिनीष्टदहरौ नारायणे तुष्टे प्रसन्ने सति देहिना पुरुषेण प्राप्यन्ते । तुष्टो हरिः सर्वान् मनोरथान् पूरयतीति भावः । अन्यथा न संप्राप्यंते इति सूचितम् । वृत्तं शार्दूलविक्रीडितम् । लक्षणं पूर्वोक्तम् ॥ २५ ॥

( भा० टी० ) सदाचरणवाला पुत्र, पतिव्रता स्त्री, सर्वदा अनुग्रह करनेवाला स्वामी, प्रेमी मित्र, अवंचक कुटुंबके लोग, क्लेशके लेशसे रहित मन, सुंदर स्वरूप, स्थिर संपत्ति, ऐश्वर्य वा सामर्थ्य और विद्यासे शोभायमान मुख, यह सब उस मनुष्यको प्राप्त होते हैं, जिसपर स्वर्गवासी मनोरथदाता हरि प्रसन्न हों ॥ २५ ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्त्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पंथाः ॥ २६ ॥

( सं० टी० ) प्राणाघातान्निवृत्तिः स कल्याणपंथा इत्याह-प्राणाघातेति । प्राणस्य आत्मनोऽन्यस्य वा आघातो हननं तस्मान्निवृत्तिर्निवर्तनम् । परधनहरणे संयमश्चित्तस्य नियमनम् । सत्यवाक्यं यथार्थभाषणम् । योग्यकाले शक्त्या दानम् । परेषां युवतिजनकथासु मूकभावस्तूर्ष्णींभावः । तृष्णाया आशायाः स्त्रोतस्तस्य विभंगः आशाप्रवाहनिवर्तनम् । गुरुषु विनयो नम्रत्वम् । सर्वभूतेष्वनुकंपा कृपा । एते पदार्थाः सर्वशास्त्रेषु सामान्यतो बाहुल्येन अनुपहतविधिः न त्यक्तो विधिर्मर्यादा एवंभूतः श्रेयसां पुण्यानामेष पन्था मार्गः प्रोक्तः । नान्य इति भावः । वृत्तं स्रग्धरा । लक्षणं तु वृत्तरत्नाकरे-'म्रौ भ्रौ यानां त्रयेण त्रिमुनियतियुता कीर्तिता स्रग्धरेयम्' ॥ २६ ॥

( भा० टी० ) जीवहिंसासे निवृत्त रहना, पराये धन हरण करनेसे संयमन करना, सत्य बोलना, समयपर यथाशक्ति दान देना, परस्त्रियोंकी कथामें मौन रहना, तृष्णाके प्रवाहको तोड़ना, बडे लोगोंमें नम्र रहना, प्राणीमात्रपर दया रखना, सब शास्त्रोंमें प्रवृत्ति रखना, और नित्यनैमित्तिक कर्मोंको न छोडना, यह सब मनुष्योंके कल्याणका पंथ है ॥ २६ ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ २७ ॥

( सं० टी० ) उत्तममध्यमाधमानां कर्मारंभे वैचित्र्यमाह-प्रारभ्यत इति । नीचैः क्षुद्रैर्विघ्नभयेन यत्किंचित्कर्म न प्रारभ्यते नानुष्ठीयते । मध्याः आदौ प्रारंभं कृत्वा पश्चाद्विघ्नेन विहता बाधिताः संतः कार्यं तथैव परित्यजन्ति । उत्तमजनास्तु यदारब्धं कार्यं तस्मिन् पुनः पुनः विघ्नेन प्रतिहता अपि न

परित्यजंति। समये विघ्ने प्राप्ते सति तन्निरसनोपायं कुर्वंति । नाऽऽरब्धं कर्म त्यजंतीत्यर्थः, वसंततिलका वृत्तम्। लक्षणं पूर्वोक्तम् ॥ २७ ॥

(भा० टी०) विघ्नके भयसे नीचजन कार्यका आरंभही नहीं करते और मध्यमजन पहले आरंभ करके पुनः विघ्नको देख कार्यको छोड बैठते हैं और उत्तमजन वारंवार विघ्न होनेसेभी कार्य आरंभ करके नहीं परित्याग करते अर्थात् उसको पूराही करके छोडते हैं॥ २७ ॥

प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं
त्वसंतो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः ।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ २८ ॥

(सं० टी०) सतां स्वाभाविकगुणमाह-प्रियेति । असंतो दुष्टाः नाभ्यर्थ्याः न याचनीयाः । कृशधनः अल्पधनः सुहृदपि न याच्यः । सर्वेषां प्रिया न्याय्या विद्युक्ता वृत्तिः । असुभंगे प्राणभंगेऽपि मलिनं पापमसुकरं नैव करोति। विपद्यापत्तौ उच्चैः स्थेयं, महत्पदे स्थितो भवति स्वगौरवं न त्यजति। महतां पदमनुविधेयम् । यथा महांतः स्वपदे स्वस्थाने महत्त्वेन स्थिताः । तथैवायमप्यनुकरोति इति विषममसिधाराव्रतं नैष्ठिकव्रतं सतां केनोद्दिष्टमुपदिष्टम्? न केनापि। अयं सतां स्वाभाविको गुण इत्यर्थः। शिखरिणीवृत्तम्। लक्षणं पूर्वोक्तम् ॥ २८ ॥

(भा० टी०) सत्पुरुषलोग दुष्टोंसे कुछ याचना नहीं करते और स्वल्पधनवाले सज्जनसे भी नहीं याँचते, न्यायोक्त अपनी जीविका उन्हें प्रिय है, प्राण जानेपरभी मलिन कर्म उनसे दुष्कर है, विपत्तिमें ऊँचे बने रहते हैं, और श्रेष्ठ लोगोंके आचरणको धारण किये रहते हैं. इस तरवारके धारसे कठोर व्रतको उन्हें किसने उपदेश किया है? किसीने नहीं; किन्तु यह तौ उनका स्वाभाविक गुण है ॥ २८ ॥

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।

मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ २९ ॥

( सं० टी० ) अतिकष्टमापन्नो मानी पुरुषो स्वमहत्वविघातकं नीचं कर्म न करोतीति सिंहान्योक्त्याऽह—क्षुत्क्षामेति । क्षुत्क्षामोऽपि क्षुधया क्षामो हीनसत्त्वोऽपि जरया कृशोऽपि शिथिलप्रायोऽपि । एवं कष्टां दशामापन्नः प्राप्तोऽपि । विपन्नदीधितिरपि निस्तेजा अपि । प्राणेषु नश्यत्स्वपि मरणसमयं प्राप्तोऽपि । एवं जाते सति क्षुधानाशार्थं केसरी सिंहः किं जीर्णं तृणमत्ति भक्षयति । कथंभूतः केसरी ? मत्ताश्च ते इभेंद्राश्च तेषां विभिन्ना विदारिताः कुंभा गंडस्थलानि तेषां ये मांसकवलास्तेषां ग्रासास्तेषु बद्धा स्पृहा येन । पुनः कथंभूतः ? मानेनाभिमानेन महांतस्तेषां मध्येऽग्रेसरोऽग्रगण्यः अहंकारयुक्तः । एवं प्राणांतसमयेऽपि सिंहवदहंकारवान् पुरुषार्थी पुरुषः क्षुद्रं कार्यं नावलम्बते । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ २९ ॥

( भा० टी० ) भूखके मारे दुर्बल, वृद्धावस्थासे क्लेशित, शक्तिहीन, कष्टकी दशाको प्राप्त, तेजोहीन और प्राणकाभी नाश होनेका समय हो तौभी मत्त गजराजके विदारे हुए मस्तकके मांसके ग्रासकी सर्वदा अभिलाषा करनेवाले सिंह कि, जो मानकरके महान् पुरुषोंमें अग्रगण्य है. वह क्या सूखी घास खायगा ? ॥ २९ ॥

स्वल्पं स्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधाशान्तये ।
सिंहो जंबुकमङ्कमागतमपि त्यक्त्वा निहंति द्विपं
सर्वः कृच्छ्रगतोऽपि वांछति जनः सत्त्वानुरूपं फलम् ॥ ३० ॥

( सं० टी० ) पूर्वोक्तो मानी जनः स्वसत्वानुरूपं फलं प्राप्नोति इति श्वदृष्टांतेनाह—स्वल्पमिति । स्वल्पं स्नायुवसादयोऽन्तर्धातवस्तेषामवशेषोंऽशमात्रं यस्मिन् तथाभूतं मलिनं निर्मांसं मांसरहितं गोर्वृषस्यास्थि श्वा शुनकः लब्ध्वा प्राप्य संतोषमेति । परंतु तत्तस्य पुनः क्षुधाशांत्यर्थं न भवति । सिंहश्च जम्बुकं शृगालमङ्कं समीपमागतमपि त्यक्त्वा द्विपं हस्तिनमेव निहंति । एवं

सर्वो जनः कृच्छ्रं कष्टं प्राप्तोऽपि सत्वानुरूपं सामर्थ्यानुरूपं फलं प्राप्नोति। पूर्वोक्तं वृत्तम् ॥ ३० ॥

( भा० टी० ) कुछ पित्त और चर्बी लगाहुआ मलिन निर्मांस और छोटासा हाड़का टुकडा पाकर कुत्ता प्रसन्न हो जाता है; परंतु उससे उसकी भूख नहीं जाती. और सिंह गोदमें आए हुए स्यारको छोडकर भी हाथीको जाकर मारता है. इससे यह सिद्ध हुआ कि, समस्त जन कैसेभी दुखी होवें, परंतु वे अपने पुरुषार्थके अनुसार फलकी इच्छा करते हैं ॥ ३० ॥

लांगूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुंक्ते ॥ ३१ ॥

( सं० टी० ) क्षुद्रजनस्य नीचत्वं महाजनस्योच्चत्वं श्वगजदृष्टांतेनाह–लांगूलेति। श्वा भषकः पिण्डदस्य यः पिण्डं ग्रासं ददाति तस्य पुरतः लोभेन लांगूलस्य पुच्छस्य चालनम्। तथा चाधश्चरणावपातं चरणानां पतनम्। तथा च भूमौ पृथिव्यां निपत्य पतित्वा वदनोदरयोर्दर्शनं च कुरुते। गजपुंगवो गजश्रेष्ठो धीरं गंभीरं यथा स्यात्तथा विलोकयति। चाटुशतैः प्रियवचनशतैः प्रार्थितः सन् भुंक्ते। एवं क्षुद्रजनो मानहीनस्थलेऽवमानितोऽपि पुनःपुनर्याचत एव। धीरः प्रार्थितोऽपि नैवायाति मानपुरःसरं गृह्णातीत्यर्थः। वृत्तं वसंततिलका। लक्षणं पूर्वोक्तम् ॥ ३१ ॥

( भा० टी० ) पूंछ हिलाना, चरणोंपर झुककर सिर देना, पृथ्वीपर लोटके पेट और मुँह दिखलाना, इत्यादि दीनता कुत्ता टुकड़ा देनेवालेके आगे करता है, और गजराज अपने आहार देनेवालेकी ओर एकबेर गंभीरतासे देखकर अनेक भांतिकी प्रियवचन प्रार्थनासे भोजन करता है ॥ ३१ ॥

परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति वंशः समुन्नतिम् ॥ ३२ ॥

( सं० टी० ) एक एव गरीयान् पुरुषो वंशोन्नतिं करोतीत्याह-परिवर्तिनीति । परिवर्तिन्यागमापायवति संसारे को न जायते जातः । वा को न मृतः । तर्हि येन जातेनोत्पन्नेन वंशः कुलं समुन्नतिमुत्कर्षं याति प्राप्नोति स जातः । अन्यो जातोऽपि मृतप्राय इत्यर्थः । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ३२ ॥

( भा० टी० ) वही पुरुष जगत्में जन्मा, जिसके जन्मसे वंशकी उन्नति हो; नहीं तो इस चक्रकी नाईं घूमते हुए संसारमें मरके कौन नहीं जन्म पाता है ? ॥ ३२ ॥

कुसुमस्तबकस्येव द्वे गती स्तो मनस्विनाम् ।
मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥ ३३ ॥

( सं० टी० ) कुसुमस्तबकसाम्येन सत्पुरुषाणां द्विधा गतिराह—कुसुमेति । कुसुमानां पुष्पाणां स्तबको गुच्छः, तस्येव मनस्विनां प्रशस्तमनसां द्वे द्विप्रकारे गती स्थिती स्तः भवतः । के ते प्रकाराः? यथा ग्रहीतरि सति पुष्पस्तबकेन सर्वलोकस्य मूर्ध्नि मस्तकेऽवशीर्यते । अथवा वने एव विशीर्येत । तथा मनस्विनः हितोपदेशकरणेन पूज्या भवंतीत्यन्यथा तूष्णीमवतिष्ठंत इति ज्ञातव्यम् । अनुष्टुब्वृत्तम् ॥ ३३ ॥

( भा० टी० ) फूलके गुच्छेकी नाईं श्रेष्ठ जनोंकी गति दो प्रकारकी है; कि, सब लोगोंके मस्तकही पर शोभित होंगे अथवा वनहीमें शुष्क होके समाप्त हो जायँगे ॥ ३३ ॥

संत्यन्येऽपि बृहस्पतिप्रभृतयः संभाविताः पञ्चषा-
स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।
द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भासुरौ
भ्रांतः पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥ ३४ ॥

( सं० टी० ) दुर्जनः स्वपराक्रमोत्कर्षदर्शनार्थमतितेजस्विनं पुरुषं पीडयतीति राहुदृष्टान्तेन वदति-सन्तीति । बृहस्पतिप्रभृतयः पञ्चषाः संभाविता महांतः संति । तान्प्रत्येष राहुर्विशेषविक्रमरुचिः सन्न वैरायते न वैरं करोति । पर्वणि दिनेश्वरः सूर्यो निशाप्राणेश्वरश्चंद्र इमौ द्वावेव भासुरौ तेजस्करावपि ग्रसते । कथंभूतो राहुः? दानवपतिः शीर्षावशेषीकृतः अतो भ्रांतः । एवं

किमुक्तं वैरी सावशेषो न हंतव्यः । अपि तु निःशेषम् । वृत्तं शार्दूलविक्रीडितम् । लक्षणं पूर्वोक्तम् ॥ ३४ ॥

( भा० टी० ) बृहस्पति आदि औरभी पांच सात ग्रह आकाशमें श्रेष्ठ हैं पर विशेष पराक्रमकी इच्छा करनेवाला राहु तिनके प्रति वैर नहीं करता है. भाइयो ! देखो कि, अमावस और पूर्णिमाको दानवपति राहु जो केवल मस्तकही मात्र रह गया है तिसपरभी दिनेश्वर [ सूर्य ] और चन्द्रमा इन दोही पूर्ण तेजवालोंको जाकर ग्रासता है ॥ ३४ ॥

वहति भुवनश्रेणीं शेषः फणाफणकस्थितां
कमठपतिना मध्ये पृष्ठं सदा स विधार्यते ।
तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
दहह महतां निःसीमानश्चरित्रविभूतयः ॥ ३५ ॥

( सं० टी० ) महतां चरित्रं निःसीममस्तीत्याह—वहतीति । शेषो नागः भुवनस्य जगतः श्रेणीं पंक्तिं फणाफणकस्थितां फणामण्डलस्थितां वहति । स शेषः कमठपतिना कूर्मेण मध्ये पृष्ठं पृष्ठमध्ये सदा धार्यते । तं कूर्मं पयोनिधिः समुद्रोऽनादरात्क्रोडो वराहस्तदधीनं कुरुते । एवं महतां चरित्रविभूतयः ऐश्वर्याणि निःसीमानो मर्यादामतिक्रान्ताः अतिशयिताः । अनेन महतां सामर्थ्यं निःसीममपरिमितमिति सूचितम् । हरिणीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३५ ॥

( भा० टी० ) चौदहों भुवनोंकी पंक्तिको शेषजीने अपने फनपर धारण किया है और कच्छपजी अपनी पीठके मध्यमें तिन शेषजीको भी धरे हैं और उन कच्छपकोभी समुद्रने अनादरसे सूकरके आधीन कर दिया है. इससे यह सिद्ध हुआ कि, महज्जनोंके चरित्रके विभूतिकी सीमा नहीं है ॥ ३५ ॥

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे
न चासौ संपातः पयसि पयसां पत्युरुचितः ॥ ३६ ॥

( सं० टी० ) क्लेशादिभिर्व्याप्तं पितरं त्यक्त्वाऽन्यत्र स्वप्राणपालनं नोचितमित्याह–वरमिति । तुषाराद्रेर्हिमालयस्य सूनोः मैनाकस्य समदमघवन्मुक्तकुलिशप्रहारैर्मदेन युक्तो मघवानिन्द्रस्तेन मुक्ताः कुलिशप्रहारास्तैः पक्षच्छेदः वरं श्रेष्ठः । कथंभूतैः ? उद्गच्छन्तः ये बहलदहनस्योद्गारास्तैर्गुरुभिः पृथुभिरेवंभूतैः खड्गप्रहारैः । कस्मिन् सति ? पितरि हिमाद्रौ क्लेशयुक्ते सति । तं पितरं त्यक्त्वा पयसां पत्युः समुद्रस्य पयस्युदके संपातः भयेन पतनं नोचितः न योग्यः । एवमात्मनः आपत्प्राप्तावपि आपत्प्राप्तस्य पितुस्त्यागो नोचित इति भावः । शिखरिणीवृत्तम् ॥ ३६ ॥

( भा० टी० ) मदमें भरे हुए इन्द्रके चलाये वज्रकी चोट कि जिसकी अग्निकी ज्वाला अति कठिन है उससे मर जाना अच्छा रहा, परंतु अपने पिता हिमाचलको क्लेशके विवश छोड़ उसके पुत्र मैनाकको उचित न था कि, जलराज समुद्रमें भाग कर कूदके अपने पक्ष बचावे ॥ ३६ ॥

यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकांतः ।
तत्तेजस्वी पुरुषः परकृतविकृतिं कथं सहते ॥ ३७ ॥

( सं० टी० ) तेजस्वी पुरुषः परकृतविकृतिं न सहते इति इनकांतदृष्टांतेनाह–यदिति । यदचेतनोऽपि चेतनारहितोऽपि इनकांतः सूर्यकान्तः । सवितुः सूर्यस्य पादैः किरणैः स्पृष्टः सन्प्रज्वलति । एवं सति सचेतनस्तेजस्वी पुरुषः परकृतां विकृतिं विकारं कथं सहते ? न सहेतेत्यर्थः । वृत्तमार्या । लक्षणं पूर्वोक्तम् ॥ ३७ ॥

( भा० टी० ) रविकान्तमणि यदि अचेतनही है, तौभी सूर्यके किरणरूपी पादस्पर्श करनेसे जल उठता है. ऐसेही तेजस्वी पुरुष परकृत अनादरको कैसे सहैं ? ॥ ३७ ॥

सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ३८ ॥

( सं० टी० ) सत्त्ववतां पराक्रमस्य हेतुः प्रकृतिरेव, न तु वयः इति सिंहशिशुदृष्टांतेनाह–सिंहेति । शिशुरपि बालोऽपि सिंहो मदेन मलिनाः कपो-

लभित्तयो येषां तेषु गजेषु निपतति । इयं सत्ववतां प्रकृतिः स्वभावः । अतः खलु निश्चयेन तेजसो हेतुः वयः न । आर्यावृत्तम् ॥ ३८ ॥

( भा० टी० ) सिंह यद्यपि बच्चा भी हो तौ भी मदमलीन बडे क्रोधवाले हाथीपर पडता है. तेजस्वियोंका यह स्वभावही है; तेजका हेतु अवस्था नहीं होती ॥ ३८ ॥

इति मानशौर्यप्रशंसा ।

---

## अथ द्रव्यप्रशंसा ।

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छताम् ।
शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना ॥
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलम् ।
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ३९ ॥

( सं० टी० ) एकेन द्रव्येण विना सर्वे गुणास्तृणप्रायाः इत्याह–जातिरिति । जातिः स्वजातिः रसातलं यातु गच्छतु । गुणाः सद्गुणास्तेषां गणः समुदायः रसातलस्याप्यधो गच्छताम् । शीलं सद्वृत्तं शैलतटात्पर्वततटात्पततु । अभिजनः संततिः ' संततिर्गोत्रजननकुलान्यभिजनान्वयौ ' इत्यमरः । वह्निना दह्यतां भस्मीक्रियताम् । शौर्येण याचितुं न शक्यतेऽतस्तद्वैरिणि शौर्ये तस्मिन् वज्रमाशु शीघ्रं निपततु । एवं सर्वस्य हानिर्भवतु परंतु नोऽस्माकं केवलं मुख्योऽर्थो द्रव्यमस्तु । किमर्थम् ? येनैकेनार्थेन विना पूर्वोक्तगुणास्तृणलवप्रायाः भवन्ति । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३९ ॥

( भा० टी० ) जाति रसातलमें जाय, और सर्व गुण उससे भी अधिक नीचे जायँ, और शील पर्वतसे गिरके नाश हो जाय और कुटुंबके लोग अग्निमें जल जायँ और शूरतारूपी शत्रुपर वज्र पडे, परंतु हमको केवल द्रव्यहीसे काम है, कि जिसके विना सब गुण तृणके टुकडेके समान हैं ॥ ३९ ॥

तानीन्द्रियाणि सकलानि तदेव कर्म
सा बुद्धिरप्रतिहता वचनं तदेव ।

अर्थोष्मणा विरहितः पुरुषः स एव
त्वन्यः क्षणेन भवतीति विचित्रमेतत् ॥ ४० ॥

( सं० टी० ) द्रव्यस्य श्रेष्ठत्वं श्लोकयुगलेनाह-तानीति । सामर्थ्ये सति यानि पूर्वमिंद्रियाणि वागादीनि आसन्, तान्येव संति । तदेव कर्म । बुद्धिरपि सैव । कीदृश्यप्रतिहता नाशं न प्राप्ता । वचनमपि तदेव वक्तृत्वशक्तिः । एवं सर्वथा पूर्वं यदासीत्तदस्ति । परंतु एकोऽर्थो द्रव्यं तस्योष्मा तेन विरहितः शून्यः स एव पुरुषः क्षणेनान्यो भवतीति एतत् विचित्रमाश्चर्यम् । तस्मात्पुरुषेणावश्यं द्रव्यं संपादनीयमिति सूचितम् । वसंततिलकावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४० ॥

( भा० टी० ) सब इंद्रियां वेही हैं और व्यौहारभी सब वेही हैं और वही प्रबल बुद्धिभी है और वचनभी वैसे ही हैं, परंतु एक द्रव्यकी उष्णता बिना वही पुरुष क्षणमात्रमें औरका और हो जाता है. यह विचित्र गति है ॥ ४० ॥

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः कांचनमाश्रयन्ति ॥ ४१ ॥

( सं० टी० ) अस्येति । यस्य पुरुषस्य वित्तं द्रव्यमस्ति स नरः कुलीन एव, स एव पंडितः बुद्धिमान्, स एव श्रुतवान् शास्त्रज्ञः, स एव गुणज्ञः गुणवेत्ता, स एव वक्ता वाक्पटुः, स एव दर्शनीयः दर्शनार्हः । एते सर्वे गुणाः कांचनं सुवर्णमाश्रयंति । कांचनसत्वे सर्वे गुणाः प्रकाशंते इति भावः । उपजातिर्वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४१ ॥

( भा० टी० ) जिसके पास द्रव्य है वही नर कुलीन, पंडित, गुणज्ञ, वक्ता और वही दर्शनयोग्य है. इससे यह सिद्ध हुआ कि, सब गुण सुवर्णके आश्रयसे रहते हैं ॥ ४१ ॥

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः संगात्सुतो लालनात् ।
विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ॥
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयात्-
मैत्रीचाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ ४२ ॥

( सं॰ टी॰ ) दुष्टप्रधानसमागमाद्राजादयो नश्यंतीत्याह–दौर्मंत्र्यादिति । नृपती राजा दौर्मंत्र्यात् दुष्टप्रधानानुरोधाद्विनश्यति स्वराज्याद्भ्रष्टो भवति । यतिः संन्यासी संगात् स्त्र्यादिसंगाद्विनश्यति भ्रष्टो भवति । सुतः पुत्रो लालनाच्छिक्षाद्यभावाद्भ्रष्टो भवति । विप्रो ब्राह्मणोऽनध्ययनात्स्वाध्यायापठनान्नष्टो भवति । कुलं वंशः कुतनयात्कुमार्गगामिनः सुतात् नष्टं भवति । शीलं स्वभावः 'शीलं स्वभावे सद्वृत्ते' इति कोशः । खलोपासनात् दुर्जनोपासनाद्विनश्यति । ह्रीर्लज्जा मद्यान्मदिरायाः गच्छति । कृषिः अनवेक्षणाद्वारंवारमनवलोकनाद्विनश्यति । स्नेहः प्रेम प्रवासात् चिरकालविदेशगमनाद्विनश्यति । मैत्री च अप्रणयात् अविनयाद्भ्रष्टा भवति । समृद्धिरैश्वर्यमनयादन्यायात् नश्यति । धनं प्रमादात् अनवधानतयाऽपात्रदानत्यागाद्विनश्यति इति राजादिभिर्दुष्टप्रधानानुसेवनं न कार्यमिति भावः । शार्दूलविक्रीडितं वृत्तम् लक्षणं पूर्वोक्तम् ॥ ४२ ॥

( भा॰ टी॰ ) दुष्ट मंत्रियोंके मंत्रसे राजा, संगतिसे संन्यासी, दुलारसे पुत्र, न पढ़नेसे ब्राह्मण, कुपुत्रसे कुल, खलकी सेवासे शील, मद्यपानसे लज्जा, बिना देखनेसे खेती, परदेशमें रहनेसे स्नेह, अनम्रतासे मैत्री, अनीतिसे वृद्धि और प्रमादपूर्वक लुटानेसे धन नष्ट होता है ॥ ४२ ॥

**दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।**
**यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥ ४३ ॥**

( सं॰ टी॰ ) वित्तत्रैविध्यमाह–दानमिति । दानं सत्पात्रे । भोगः स्वजनैः सह उपभोगः । नाशश्चौरादिभ्यः । एतास्तिस्रो वित्तस्य द्रव्यस्य गतयो भवंति यः पुरुषः सत्पात्रेषु न ददाति न भुंक्ते उपभोगं न कुरुते, तस्य पुरुषस्य वित्तस्य तृतीया गतिर्नाशो भवति । तस्मात्पुरुषमात्रेण सति द्रव्ये नाशभयाद्दानभोगादिकमवश्यं संपादनीयमिति तु तात्पर्यम् । आर्यावृत्तम् लक्षणं पूर्वोक्तम् ॥ ४३ ॥

( भा॰ टी॰ ) दान, भोग और नाश येही तीन धनकी गति हैं जिसने नहीं दिया और अपने भोगमें न लाया, उसके धनकी नाशरूप तीसरी गति होती है ॥ ४३ ॥

मणिः शाणोल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालललना
तनिम्ना शोभंते गलितविभवाश्चार्थिषु नृपाः ॥ ४४ ॥

( सं० टी० ) अर्थिषु बहुदानवितरणाद्राजादयः शोभंते इति मण्यादिदृष्टांतेनाह—मणिरिति । शाणेन निकषपाषाणेनोल्लीढ उल्लिखितः कृशीकृतो मणिः हीरकादिः हेतिभिरायुधैर्निहतः । कृतक्षतः समरे संग्रामे विनयशीलो योद्धा । मदेन क्षीणो नागो हस्ती । शरदि शरत्काले श्यानानि शुष्काणि पुलिनानि जलनिर्मुक्ततटानि यासां ताः सरितो नद्यः । कलया षोडशभागेन शेषोऽवशिष्टश्चंद्रः । सुरते मृदिता चुंबनालिंगनाद्युपमर्दम्लायितांगी बाला नवयौवना वनिता स्त्री । एवमर्थिषु याचकेषु गलितः संक्रांतः विभवः समृद्धिर्येषां ते नृपाश्च । तनिम्ना तनोः कृशस्य भावस्तनिमा कार्श्यं तेन शोभंत इत्यन्वयः । शोभारूपैकधर्मादीपकालंकारः । तल्लक्षणं तु ‘ वदंति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः । मदेन भाति कलभः प्रतापेन महीपतिः ’ इति । एवं पुरुषेण दानमवश्यं कर्तव्यमिति सूचितम् । शिखरिणीवृत्तम् ॥ ४४ ॥

( भा० टी० ) सानसे खरादी हुई मणि, संग्राममें हथियारोंसे घायल हुआ शूर, मदसे उतरा हाथी, शरदृतुकी स्वल्प नदी, दूजका चंद्रमा, सुरत ( मैथुन ) में मर्दन की हुई बाला स्त्री और अति दान देनेसे दरिद्री हुए राजा, इन सबकी दुर्बलताही की शोभा है ॥ ४४ ॥

परिक्षीणः कश्चित् स्पृहयति यवानां प्रसृतये
स पश्चात्संपूर्णे कलयति धरित्रीं तृणसमाम् ।
अतश्चानैकान्त्याद्गुरुलघुतयार्थेषु धनिना-
मवस्था वस्तूनि प्रथयति च सङ्कोचयति च ॥ ४५ ॥

( सं० टी० ) वस्तूनां गुरुत्वलघुत्वहेतुरवस्थाभेदः नान्य इत्याह—परिक्षीणेति । कश्चित्पुरुषः क्षीणो द्ररिद्रः सन् यवानां प्रसृतये अर्धाञ्जलिपरिमितधान्यार्थं स्पृहयति स्पृहां करोति । स एव पश्चादग्रे लक्ष्म्या संपूर्णः सन्निमां धरित्रीं

तृणसमां तृणतुल्यां गणयति मन्यते। अतो धनिनामनैकांत्यादेकस्थितेरभावादव-स्थार्थेषु प्रयोजनेषु गुरुलघुतया वस्तूनि प्रथयति संकोचयति च। यदा कालेनावस्थाया गुरुत्वं भवति तदा गुरुत्वमेवेच्छति। यदा च तस्या लघुत्वं भवति तदा लघुत्वमेवांगीकरोति। एवं कालपरत्वेनावस्थाभेदो भवतीति भावः। शिखरिणीवृत्तम्। लक्षणं पूर्वोक्तम्॥ ४५॥

(भा० टी०) जब कोई परिक्षीण अर्थात् दरिद्री होता है, तब एक पसरही जवकी इच्छा करता है; और वही मनुष्य जब सर्वसंपन्न अर्थात् धनिक अवस्थामें हो जाता है, तब पृथ्वीको तृणसमान गिनता है! इस-कारण यही दोनों चंचल अवस्था पुरुषको गुरु और लघु बनाती हैं और वस्तुओंको भी फैलाती और समेटती हैं॥ ४५॥

राजन्! दुधुक्षसि यदि क्षितिधेनुमेनां
तेनाद्य वत्समिव लोकममुं पुषाण।
तस्मिंश्च सम्यगनिशं परिपोष्यमाणे
नानाफलैः फलति कल्पलतेव भूमिः॥ ४६॥

(सं० टी०) राज्ञो भूमिपालनप्रकारमाह—राजन्निति। हे राजन्! यद्येनां क्षितिधेनुं पृथिवीरूपां धेनुं दुधुक्षसि दोग्धुमिच्छसि। तेन दोहनेनाद्याधुनेमं लोकं प्रजां वत्समिव पुषाण पोषयेति। तस्मिन्नृलोके वत्से सम्यक्परिपोष्यमाणे सतीयं भूमिः कल्पलतेवानिशं सार्वकालं नानाफलैः फलति फलं ददाति। तद्राज्ञाऽवश्यं प्रजापालनं कर्तव्यमिति भावः। वसंततिलका वृत्तम्। लक्षणं तु पूर्वोक्तमेव॥ ४६॥

(भा० टी०) हे राजा! जो पृथ्वीरूपी धेनुको दुहा चाहते हो, तो बछरेकी नाईं प्रजालोगोंका पोषण करो. जब यह प्रजारूपी बछड़ा अच्छी भांतिसे निरन्तर पोषा जायगा, तब पृथ्वी कल्पलताकी नांई अनेक प्रकारके फल देगी॥ ४६॥

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या।

नित्यव्यया प्रचुरनित्यधनागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४७ ॥

( सं० टी० ) राज्ञां नीतिर्नैकविधा किंत्वनेकप्रकारा इति वेश्यादृष्टांतेनाह-सत्येति । कुत्रचिद्व्ययं सर्वत्र वक्तव्यम् । कुत्रचित्सत्यासत्यत्वेनाननृतानृतत्वेन। परुषा काठिन्येन । प्रियवादिनी मधुरभाषणेन । हिंस्रा घातुकतया । ' शरारुर्घातुको हिंस्रः ' इत्यमरः । दयालुः कृपालुत्वेन । अर्थपरार्थग्रहणेन । वदान्या दानशौण्डा । ' स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे ' इत्यमरः । नित्यव्यया यस्य यन्नियमितं तेन । प्रचुरं नित्यं धनानामागमनं यस्यां तादृशी । एवं नृपते राज्ञो नीतिः कर्तव्यताऽनेकरूपा । यथा वारांगना वेश्या नानावेषान् करोति तथा राजनीतिरपि नानारूपा भवति । इवशब्दसादृश्यादुपमालंकारो बोध्यः । वृत्तं वसंततिलका । लक्षणं पूर्वोक्तम् ॥ ४७ ॥

( भा० टी० ) कहीं सत्य, कहीं असत्यवादिनी, कहीं कठोर, कहीं प्रियभाषिणी, कहीं हिंसा करनेवाली, कहीं दयालु, कहीं लोभी, कहीं उदार, कहीं नित्य प्रति बहुतसा द्रव्य उठानेवाली और कहीं बहुतही संचय करनेवाली, यह राजनीति वेश्याकी नाईं अनेक रूपसे रहती है ॥ ४७ ॥

विद्या कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च ।
येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ४८ ॥

( सं० टी० ) " विद्यादिषड्गुणाः पुरुषाणामपेक्षिताः, तद्विना तेषां नृपाश्रयो व्यर्थ " इत्याह-विद्येति । विद्या प्रसिद्धा । सर्वासु दिशासु कीर्तिः यशः । ब्राह्मणानां पालनं रक्षणम् । दानं सत्पात्रेभ्यः । भोगः स्रक्चंदनादिः । आपद्भ्यः मित्रसंरक्षणम् । एते पूर्वोक्ताः षड्गुणाः येषां न प्रवृत्ताः न प्राप्ताः । तेषां पार्थिवस्य राज्ञ उपाश्रयेणाश्रयेण कोऽर्थः किं प्रयोजनम् । न किमपीत्यर्थः । वृत्तं शालिनी । ' शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ' इति लक्षणम् ॥ ४८ ॥

( भा० टी० ) विद्या, कीर्ति, ब्राह्मणोंका पालन, दान, भोग और मित्रोंकी रक्षा, जिनमें ये गुण न हुए उन्हें राजाका अच्छी तरहसे आश्रय करनेसे क्या फल है ? ॥ ४८ ॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाऽधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ ४९ ॥

( सं० टी० ) ब्रह्मणा स्वभालपट्टलिखितमर्थं पुरुषो गृह्णाति नाधिकमिति घटदृष्टांतेन वर्णयति-यदिति । धात्रा ब्रह्मणा यन्निजे स्वकीये भालपट्टे स्तोकमल्पं महद्वहु धनं लिखितम्, तदेव पुरुषः मरुस्थले निर्जलदेशे मेरौ च सुवर्णाद्रौ नितरां निश्चयेन प्राप्नोति । अतस्त्वं धीरो भव । वित्तवत्सु द्रव्याढ्येषु कृपणां दीनां वृत्तिं वर्तनं जीवनं वा वृथा मा कृथाः मा कुरु । अत्र दृष्टांतः । पश्य कूपे अथवा पयोनिधौ समुद्रे घटः तुल्यं स्वस्वप्रमाणानुरूपं जलं गृह्णाति । अतः स्वप्रारब्धाधीनधनलाभस्य द्रव्येच्छुपुरुषैः वित्ताढ्येषु कृपणवृत्त्या न वर्तितव्यमिति सूचितम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४९ ॥

( भा० टी० ) विधाताने जो अपने ललाटमें लिख दिया है किंचित् धन अथवा बहुत धन सो चाहे मारवाड़की भूमिमेंभी जाय बैठे तौभी वह निरन्तर प्राप्त होगा और उससे अधिक सुमेरुपरभी जानेसे न मिलेगा ! इसलिये धैर्य धरो और धनवालोंके निकट वृथा याचना न करो; क्योंकि देखो, कूप और समुद्रमें घड़ा समान ही जल ग्रहण करता है ! ॥ ४९ ॥

त्वमेव चातकाधारोऽसीति केषां न गोचरः ।
किमम्भोदवराऽस्माकं कार्पण्योक्तिं प्रतीक्षसे ॥ ५० ॥

( सं० टी० ) मेघं प्रति चातकस्य उक्तिः-त्वमेवेति । हे अम्भोदवर मेघश्रेष्ठ ! त्वं चातकानां पक्षिविशेषाणामाधार आश्रयोऽसीति केषां गोचरः प्रत्यक्षं न ? अपि तु सर्वेषां गोचरः अस्ति । तस्मात् अस्माकं चातकानां कार्पण्योक्तिं दैन्योक्तिं किं प्रतीक्षसे किमुपेक्षसे ? मम दैन्योक्तिं श्रुत्वा मां कृपणं वृष्ट्या जीवयेति भावः । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ५० ॥

( भा० टी० ) हे श्रेष्ठ मेघ ! तुमही हम पपीहाके आधार हो यह बात किसपर नहीं प्रसिद्ध है ? अब तुम हमारी दीन वचनोंकी उपेक्षा क्यों करते हो ? ॥ ५० ॥

रे रे चातक सावधानमनसा मित्र क्षणं श्रूयता-
मम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः।
केचिद्वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद्वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः॥५१॥

(सं० टी०) तदुत्तरमाह–रे रे चातकेति। रे रे इति वीप्सा। हे चातक हे मित्र! सावधानमनसा स्वस्थचित्तेन क्षणं क्षणमात्रं श्रूयताम्, मम वचः इति शेषः। हि यस्माद्गगने अंभोदाः मेघाः बहवः संति। तु सर्वे एतादृशाः करुणावंतः न। कुतः? केचिद्वृष्टिभिर्वसुधां पृथिवीमार्द्रयंति जलयुक्तां कुर्वंति। केचिद्वृथा व्यर्थं गर्जंति गर्जनां कुर्वंति। न तु वृष्ट्या। तस्माद्यं यं मेघं पश्यसि तस्यतस्य पुरतोऽग्रे दीनं वचः भाषणं मा ब्रूहि वद। तर्हि ये दातारः संति तान् प्रति याञ्चा कर्तव्या। नान्यं प्रतीति तु तात्पर्यम्। शार्दूलविक्रीडितं वृत्तम्। लक्षणं पूर्वोक्तम्॥५१॥

(भा० टी०) अरे चातक! सावधान मनसे क्षणमात्र हमारी बात सुन; कि, मेघ आकाशमें बहुतसे हैं, परन्तु सब ऐसे नहीं. कितनेक तो वर्षा करके पृथ्वीको पूर्ण कर देते हैं और कितनेक वृथाही गर्जकर चले जाते हैं. हे मित्र! इसलिये जिसको तू देखै, उसीके आगे दीन वाक्य मत कह॥५१॥

इति द्रव्यप्रशंसा।

---

## अथ दुर्जनप्रशंसा।

अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा।
सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम्॥५२॥

(सं० टी०) दुष्टजनानां स्वभावसिद्धलक्षणमाह–अकरुणेति। सर्वेषु प्राणिमात्रेषु अकरुणत्वं दयाहीनत्वम्। अकारणविग्रहः कारणं विना वैरम्। परधने परद्रव्ये तथा च परस्य योषिति स्त्रियां स्पृहेच्छा। स्वजनेषु बंधुजनेषु सहिष्णोर्भावः सहिष्णुता न सहिष्णुता असहिष्णुता असहनता। इदं दुरात्मनां दुष्टजनानां प्रकृतिसिद्धं लक्षणमिति शेषः। द्रुतविलंबितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणम्॥५२॥

( भा० टी० ) करुणा न करना, अकारण विग्रह अर्थात् लडाई करना, पराये धन और स्त्रीकी सर्वदा इच्छा रखना, अपने कुटुम्ब और मित्रकी बात न सहना, यह बातें दुष्टजनोंकी स्वाभाविक सिद्ध हैं ॥५२॥

दुर्जनः परिहर्तव्यो विद्यया भूषितोऽपि सन् ।
मणिनाऽलंकृतः सर्पः किमसौ न भयंकरः ॥ ५३ ॥

( सं० टी० ) विद्याभूषितस्य दुर्जनस्य संगतिर्न युक्ता इति सर्पदृष्टांतेन वर्णयति-दुर्जन इति । दुर्जनः दुष्टजनः विद्ययाऽलंकृतोऽपि सन् परिहर्तुं त्यक्तुं योग्यः परिहर्तव्योऽस्ति । न संगयोग्य इत्यर्थः । असौ सर्पः मणिना अलंकृतोऽपि भयं करोतीति भयंकरः न किम् ? अपितु भयंकर इत्यर्थः । यथा मणिभूषितसर्पो भयात्त्याज्यः, तथा विद्यालंकृतदुर्जनोऽपि इति भावः । वृत्त-मनुष्टुप् । लक्षणं तु पूर्वमेवोक्तम् ॥ ५३ ॥

( भा० टी० ) यद्यपि विद्यावान्भी हो, तथापि दुर्जन परित्यागहीके योग्य है, क्योंकि मणिकरके भूषित सर्प क्या भयंकर नहीं होता ? अर्थात् होताही है ॥ ५३ ॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तुर्यशक्तिः स्थिरे
तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः॥५४॥

( सं० टी० ) गुणविशिष्टानां पुरुषाणां सर्वे गुणाः दुर्जनैर्दोषत्वेन कल्प्यंते इति वक्तुं तेषां गुणेष्वारोपप्रकारमाह-जाड्यमिति । गुणिनां गुणो यो दुर्जनैर्नांकितः स को नाम भवेत् नास्त्येव । तत्कथम् । ह्रीमति लज्जावति पुरुषे जाड्यं मौर्ख्यं स्थापयंति । व्रते रुचिः प्रीतिर्यस्य तस्मिन्पुरुषे दंभो गण्यते । शुचौ शुचिमति कितवस्य भावः कैतवं धूर्तता । शूरे शौर्यादिगुणयुक्ते निर्घृणता निर्दयत्वम् । मुनौ मौनवति विमतिता प्रज्ञाराहित्यम् । वक्तुमशक्तिः । प्रियालापिनि प्रियवक्तरि दैन्यं दीनत्वम् । तेजस्विन्यवलिप्तता गर्विष्ठता । 'अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि च' इति मेदिनी । वक्तरि मुखरता वाचालता । स्थिरे पुरुषे अशक्तिः शक्त्यभावत्वम् । एवं सर्वेष्वपि गुणेषु दोषा

रोपो दुर्जनैः क्रियते । एवं दुर्जनैर्नांकितो न निंदितः इत्थं गुणो नास्ति । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५४ ॥

( भा० टी० ) दुर्जनलोग लज्जावान् पुरुषको शिथिल,व्रतधारीको दंभी, पवित्रको पाखंडी, शूरको निर्दयी, सूधेको मूर्ख,प्रिय कहनेवालेको दीन, तेजस्वीको गर्वीला, वक्ताको बकवादी और स्थिरचित्तवालेको आलसी कहते हैं. इससे यह जान पड़ता है कि—गुणियोंमें कौन ऐसा गुण है, कि जिसे दुर्जनोंने कलंक नहीं लगाया ? ॥ ५४ ॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं निजैः सुमहिमा यद्यस्ति किं मंडनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ ५५ ॥

( सं० टी० ) त्याज्योपायतया गुणदोषान्विशदयति—लोभश्चेदिति । लोभः प्राप्तेऽर्थेप्यधिकाऽऽशा चेदगुणेन गुणहीनेन किम् । स्वल्पोऽपि लोभः सर्वगुणानाच्छादयतीत्यर्थः । " यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ॥ लोभः स्वल्पोऽपि तान् हंति श्वित्रो रूपमिवेप्सितम् " इति भागवते प्रतिपादितम् । यदि पिशुनस्य दुर्जनस्य भावः पिशुनता दुर्जनता तर्हि पातकैः किम् ? सर्वेषां पातकानां पिशुनतायामंतर्भावोऽस्ति । सत्यं यथार्थभाषणं चेत्तपसा कृच्छ्रचांद्रायणादिना किम् ? सर्वमिदं सत्ये प्रतिष्ठितमिति भावः । यदि मनोंऽतःकरणं शुचि शुद्धं चेत्तीर्थेन गंगादिसेवनेन किम् ? यदि सुजनस्य भावः सौजन्यं चेत् निजैरात्मीयैर्जनैः किम् ? सुजनता सर्वं जनं संपादयतीत्यर्थः । यदि सुमहिमा सुश्लोकश्चेत् मंडनैरितरभूषणैः किम् ? यदि सद्विद्या उत्तमविद्या चेद्धनैः किम् ? सर्वधनेषु विद्याधनस्य श्रेष्ठत्वात् । यद्यपयशोऽपकीर्तिश्चेन्मृत्युना किम् ? तस्यैव मृत्युकार्यकारित्वादिति भावः । वृत्तं शार्दूलविक्रीडितम् । लक्षणं पूर्वोक्तम् ॥ ५५ ॥

( भा० टी० ) लोभ जिसमें है फिर उसमें और अवगुण क्या चाहिये ? जो कुटिल है उसे और पातक करनेकी क्या आवश्यकता है ? सत्यवक्ताको तपका क्या प्रयोजन है ? जिसका मन शुद्ध है, उसे तीर्थ करनेसे क्या अधिक फल होगा ? जो सज्जन हैं उन्हें मित्र और

कुटुम्बकी क्या कमी है ? यशी पुरुषोंको यशसे बढके क्या भूषण है ? सद्विद्यावालेको और दूसरे धनकी क्या अपेक्षा है ? जिसका सर्वत्र अपयश है, उसे मृत्यु पानेसे क्या अधिक होगा ? अर्थात् कुछभी नहीं ॥ ५५ ॥

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५६ ॥

( सं० टी० ) मानसिकदुःखान्याह-शशीति । शशी चंद्रो दिवसे धूसरः प्रभाविहीनः । कामिनी स्त्री गलितं नष्टं यौवनं तारुण्यं यस्याः सा । सरः सरोवरं विगतं वारिजं कमलं यस्मात्तत् । शोभना आकृतिः हस्तपादाद्यवयवो यस्य तस्य मुखमाननं, न विद्यंते अक्षराणि वर्णा यस्मिंस्तत् । प्रभुः राजा धनेषु परायणस्तत्परः । सज्जनः साधुजनः सततदुर्गतः निरंतरदारिद्र्यं प्राप्तः । नृपस्य राज्ञोऽगणे चत्वरे गतः प्राप्तः खलः दुर्जनः। एतानि सप्त शल्यानि मे मनसि । वर्तंत इति शेषः। पृथिवीवृत्तम् । लक्षणं पूर्वमेवोक्तम् ॥ ५६ ॥

( भा० टी० ) दिनका मलिन चन्द्रमा, यौवनहीन स्त्री, विना कमलका सरोवर, सुन्दर रूपवाला मूर्ख, धनवान् कृपण, सज्जन दरिद्री और राजसभामें खल, ये सातों हमारे हृदयमें कांटेकी नाईं गडते हैं ॥ ५६ ॥

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ।
होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥ ५७ ॥

( सं० टी० ) अत्यंतकोपनस्य राज्ञः कोऽपि प्रीत्यर्हो न भवतीति वह्निदृष्टांतेन वर्णयति-नेति । चंडकोपानामुग्राणां भूभुजां राज्ञां कश्चिदात्मीयः प्रीत्यर्हो न भवति । यथा पावकोऽग्निर्होतारं होमकर्तारमपि जुह्वानं होमसमयेऽपि स्पृष्टः सन्दहति । अनुष्टुप् वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५७ ॥

( भा० टी० ) प्रचण्ड क्रोधवाले राजाओंका कोई आप्त मित्र नहीं; जैसे होम करनेवालेकोभी अग्नि छूजाय तो उसे जलाही देता है ॥ ५७ ॥

मौनान्मूकः प्रवचनपटुश्चाटुलो जल्पको वा
धृष्टः पार्श्वे वसति च तदा दूरतश्चाप्रगल्भः।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः॥ ५८॥

(सं० टी०) सेवाधर्मः परमकठिन इत्याह-मौनेति। यदा सेवकेन मौनं धृतं तदा मूकः। प्रवचनपटुश्चेच्चाटुलो वाचालोऽथवा जल्पकः यत्किंचिद्वदति। पार्श्वे स्थितः सन् धृष्टः, दूरतो भवति तदाऽप्रगल्भः। क्षांतिः क्षमा धृता चेद्भीरुर्भयभीतः, यदि न सहते तदा नाभिजातो मूर्खोऽप्रयोजकः। एवं प्रायशः सेवाधर्मः परमगहनः कठिनो योगिनामप्यगम्यः कर्तुमशक्यः। मंदाक्रांतावृत्तम्। 'मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद्गुरू चेत्'॥५८॥

(भा० टी०) मौन रहनेसे गूंगा, वक्ता होनेसे वातुल और बकवादी, समीप होनेसे ढीठ, दूर रहनेसे मूर्ख, क्षमा करनेसे कादर और न सहनेसे कुलहीन कहलाता है. तात्पर्य यह कि, सेवाधर्म परम कठिन है; वह योगियोंकोभी अगम्य है॥ ५८॥

उद्भासिताखिलखलस्य विशृङ्खलस्य
प्राग्जातविस्तृतनिजाधमकर्मवृत्तेः।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमास्यते कैः॥ ५९॥

(सं० टी०) क्षुद्रसेवाकारिणः सुखिनो न भवंतीति वदति-उद्भासितेति। नीचस्य क्षुद्रजनस्य गोचरगतैः समीपवर्तिभिः पुरुषैः कैः सुखमास्यते उपविश्यते। कथंभूतस्य नीचस्य। उद्भासिताखिलखलस्य उद्भासिताः प्रकटीकृता अखिलाः समस्ताः खला येन खलत्वं प्रकटीकृतम्। पुनः प्राक् पूर्वं जाता इदानीं विस्तृता निजा स्वकीयाऽधमकर्मणां वृत्तिर्येन। एवं सति दैवाददृष्टवशात्प्राप्तो विभवो येन। पुनः कथंभूतस्य? गुणान् सद्गुणान् द्विषतीति गुणद्विट् तस्य गुणद्विषः। एवंभूतगुणस्य समीपे कैरपि सुखेन नैव उपवेष्टुं शक्यते, अथवा सुखं प्राप्यते। वसंततिलका वृत्तम्। लक्षणं पूर्वोक्तम्॥ ५९॥

(भा० टी०) अनेक खलोंको प्रकाश करनेवाला, निरंकुश, व जिसके पूर्वजन्मके मंद अधम कर्म उदय हो रहे हैं, और दैवकरके

धनभी उसे प्राप्त है और गुणोंसे द्वेष करनेवाला, ऐसे नीचके वश रहकर किसने सुख पाया है ? ॥ ५९ ॥

**आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ।**
**दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ ६० ॥**

( सं० टी० ) दिनपूर्वार्धपरार्धविभागसंबंधिच्छायेव खलसज्जनयोर्मैत्री अस्ति इत्याह–आरंभगुर्वी इति । आरंभे प्रारंभे गुर्वी महती । क्रमेण क्षयिणी प्रतिक्षणं क्षयशीला । पुरा पूर्वं लघ्वी पश्चात् वृद्धिरस्यास्तीति वृद्धिमती । दिनस्य दिवसस्य पूर्वार्धं च परार्धं च ताभ्यां भिन्ना छायेव खला दुर्जनाश्च सज्जनाः साधवश्च तेषां मैत्री मित्रता भवति । यथा दिवसपूर्वार्धे प्रारंभे छाया महती, तदुत्तरे दिवसवृद्ध्या क्षयिणी, तथा खलानां मैत्री आरंभे लघ्वी परिणामे महती भवति । यथा दिनपरार्धे आरंभे लघ्वी छाया पश्चात् दिनक्षये वृद्धिमती भवति, तथा सज्जनानां मित्रता आरंभे लघ्वी परिणामे वृद्धिमती भवतीत्यर्थः । उपजातिर्वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६० ॥

( भा० टी० ) आरंभमें बहुत लंबी चौंडी, फिर क्रमसे पूर्वार्ध ( दोपहरकी ) छायाकी नांई खलोंकी मैत्री क्षण क्षण घटती जाती है, और सज्जनोंकी मैत्री पहिले बहुत किंचित् फिर क्रमही क्रम परार्द्ध ( दोपहरके अनंतर ) की छायाकी नाईं प्रतिक्षण बढती जाती है ॥ ६० ॥

**मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ।**
**लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ६१ ॥**

( सं० टी० ) लुब्धकादयः कारणं विना वैरिणो भवंति इति स्पष्टयति—मृगमीनेति । अस्मिन् जगति लोके लुब्धकः मृगयुः । ‘ व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः ’ इत्यमरः । धीवरः कैवर्तः ‘कैवर्ते दाशधीवरौ ’ इत्यमरः पिशुनो दुर्जनः । ‘ पिशुनो दुर्जनः खलः ’ इत्यमरः । एते निष्कारणं कारणं विना तृणं च जलं च संतोषश्च एतैर्विहिता वृत्तिर्जीवनं येषां तेषां मृगमीनसज्जनानां हरिणमत्स्यसाधूनां वैरिणः शत्रवो भवंति । द्वितीयार्थे षष्ठी । आर्यावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६१ ॥

( भा०टी० ) हरिण, मछली और सज्जन,ये तीनों तृण, जल और संतोषकरके अपनी जीविका करते हैं. पर व्याध, केवट और कुटिल लोग

विना प्रयोजनही इनसे संसारमें बैर रखते हैं ॥ ६१ ॥ इति दुर्जननिन्दा।

---

## अथ सुजनप्रशंसा।

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले-
ष्वेते येषु वसंति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ६२ ॥

( सं० टी० ) वांछादिगुणयुक्ता ये नरास्ते नमस्कारार्हाः भवंतीति दर्शयति-वांछेति । सज्जनानां साधुजनानां संगमे समागमे वांछा इच्छा। परेषां गुणे प्रीतिरभिरुचिः । गुरौ नम्रता नम्रत्वम् । विद्यायां व्यसनमासक्तिः । स्वस्यात्मनो योषिति स्त्रियां रतिः रागः । लोकापवादात् लोकनिंदायाः भयं भीतिः । ' अपवादो तु निन्दाज्ञे ' इत्यमरः । शूलिनि शिवे भक्तिः । आत्मनो मनसो दमने निग्रहे शक्तिः सामर्थ्यम् । खलेषु पिशुनेषु संसर्गः संबंधस्तस्य मुक्तिस्त्यागः । एते ये निर्मला निर्दोषा गुणा ते येषु वसंति तेभ्यो नरेभ्यो नमो नमस्कारोऽस्तु । ते नराः खलु पूजनीया इति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६२ ॥

( भा० टी० ) सज्जनोंके संगकी वांछा, पराये गुणमें प्रीति, बड़े लोगोंसे नम्रता, विद्यामें व्यसन, अपनीही स्त्रीसे रति, लोकनिंदासे भय, महेश्वरमें भक्ति, आत्मा ( मन ) के दमनकी शक्ति और खलके संगका त्याग, ये निर्मल गुण जिन पुरुषोंमें हैं तिन्हें हम नमस्कार करते हैं ॥ ६२ ॥

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ६३

( सं० टी० ) महामनसां पुरुषाणां स्वभावसिद्धलक्षणमाह—विपदीति । विपदि विपत्तौ धैर्यं धीरता । अथाभ्युदये ऐश्वर्ये क्षमा क्षांतिः । सदसि सभायां वाक्पटुता वाक्पाटवम् । युधि संग्रामे विक्रमः पराक्रमः । यशसि कीर्तावभिरुचिः प्रीतिः । श्रुतौ वेदशास्त्रादिषु व्यसनमासक्तिः । इदं सर्वं हि निश्चयेन महात्मनां महामनसां स्वभावसिद्धमुत्पन्नम् । नान्येन शिक्षितमिति भावः । द्रुतविलंबितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६३ ॥

( भा० टी० ) विपत्तिमें धैर्य, ऐश्वर्यमें क्षमा, सभामध्य वार्तामें चतुराई, संग्राममें पराक्रम, अपने यशमें रुचि और शास्त्रमें व्यसन ये बातें महात्माओंमें स्वाभाविक होती हैं ॥ ६३ ॥

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ६४ ॥

( सं० टी० ) सतां महत्त्ववैचित्र्यमाह—प्रदानमिति । प्रदानं प्रकर्षेण ब्राह्मणेभ्यो गवादि दानं यद्दत्तं प्रच्छन्नमाच्छादितम् । गृहमुपगते प्राप्ते याचके संभ्रमविधि आदरविधिः । प्रियं कृत्वा मौनं एकस्य प्रियं कृतं छन्नं वदाति । सदसि सभायामुप कृतेरेकेनोपकारः कृतस्तस्य कथनं करोति । लक्ष्म्यां सत्यामनुत्सेकोऽगर्वः । परस सत्कथाः निरभिभवसाराः निन्दारहिताः निरवधि कर्तव्याः । इदं व्रतमसिधारा वत् कठिनं सतां केनोपदिष्टम् ? न केनापि । अयं सतां स्वाभाविको गुणः । शिख रिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६४ ॥

( भा० टी० ) दानको गुप्त रखना, अपने घर आएहुए पुरुषक सत्कार करना, पराया भला कर मौन रहना, दूसरेके किएहुए उपकारक सभामें वर्णन करना, धन पाकर गर्व न करना और पराई चर्चामें उसक निरादरकी बात बचाकर कहना, यह तरवारकी धारसा कठिण व्रत सत् रुषोंको किसने उपदेश किया है ? ॥ ६४ ॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् ।
हृदि स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफलं
विनाऽप्यैश्वर्येण प्रकृतिमहतां मंडनमिदम् ॥ ६५ ॥

( सं० टी० ) महतां सत्पात्रे दानादिकमेव भूषणं नान्यदित्याह—करे इति करे हस्ते त्यागः सत्पात्रे दानम् । श्लाघ्यः स्तुत्यस्तदेव हस्तभूषणम् । नतु कि बादिभ्यो दानमिति । शिरसि मस्तके गुरोः पादयोः चरणयोः प्रणयि

नम्रता। मुखे आनने सत्या यथार्थवाणी। भुजयोर्बाह्वोर्विजयि जयशीलमतुलं निरुपमं वीर्यं पराक्रमः। हृदि अंतःकरणे स्वच्छा निर्मला वृत्तिर्वर्तनम्। अधिगतं प्राप्तं एकं मुख्यं व्रतमीश्वरप्राप्तिसाधनं तदेव तस्य फलं येन तत्। श्रुतं शास्त्राध्ययनम्। इदं ऐश्वर्येण विनाऽपि प्रकृत्या स्वभावेन महांतस्तेषां मंडनं भूषणम्। नान्यदिति भावः। शिखरिणी वृत्तम् ॥ ६५ ॥

(भा० टी०) हाथ दानसे, मस्तक बड़े लोगोंके पैर पड़नेसे, मुख सत्य बोलनेसे, दोनों भुजा अतुल पराक्रमसे, हृदय स्वच्छ वृत्तिसे, कान शास्त्रश्रवणसे बड़ाईके योग्य होते हैं और येही सत्पुरुषोंके विना ऐश्वर्यके भूषण हैं ॥ ६५ ॥

संपत्सु महतां चित्तं भवत्युत्पलकोमलम्।
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ ६६ ॥

(सं० टी०) संपदापत्काले सतामंतःकरणवृत्तिमाह-संपत्स्विवति। महतां साधूनां चित्तमंतःकरणं संपत्सु संपत्तिषु उत्पलवत्कमलवत्कोमलं मृदु भवति। आपत्सु आपत्तिषु च महांश्चासौ शैलः पर्वतस्तस्य शिलानां संघातः समूहस्तद्वत् कर्कशं कठिनम्। 'कर्कशं कठिनं क्रूरम्' इत्यमरः। आपत्काले धीरत्वं भजते इति भावः। अनुष्टुप् वृत्तम्। लक्षणं पूर्वोक्तम् ॥ ६६ ॥

(भा०टी०) संपत्तिमें महात्मालोगोंका चित्त कमलसेभी कोमल रहता है और आपत्तिमें पर्वतकी बडीसी शिलाकी नाईं कठिन हो जाता है ॥६६॥

संतप्तायसि संस्थितस्य पयसो नामाऽपि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते।
स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणाः संसर्गतो देहिनाम् ॥ ६७ ॥

(सं० टी०) प्रायेण देहिनां गुणवैचित्र्यं संबंधादेव भवतीति जलदृष्टांतेनाह-संतप्तेति। एकमेव जलं तत्संसर्गतोऽनेकगुणं भवति। तद्यथा-संतप्तायसि संतप्ते लोहे क्षिप्तं चेत्पयसो नामाऽपि न ज्ञायते, अभाव एव भवति। तदेव जलं नलिनीपत्रे स्थितं मुक्ताकारतया राजते। तदेव जलं स्वातीमहानक्षत्रे मेघात् सागरे पतितं, तदपि शुक्तिकामध्यगतं चेन्मुक्ताफलं जायते। एवं प्रायेण

प्रायशः पुरुषस्योत्तममध्यमाधमगुणः संसर्गतो जायते । तस्माद्देहधारिभिः पुरुषैरुत्तमा संगतिः कार्या, न मध्यमाधमयोरिति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६७ ॥

( भा० टी० ) तप्त लोहेपर जलका बुन्द पड़नेसे उसका नामभी नहीं रहता; वही बूंद कमलके पत्रपर पड़नेसे मोतीके सदृश शोभित होता है; फिर वही बूँद स्वाती नक्षत्रमें मेघसे समुद्रकी सीपमें पडनेसे मोती हो जाता है; इससे यह सिद्ध हुआ कि, प्रायः अधम, मध्यम और उत्तम गुण संसर्गहीसे होते हैं ॥ ६७ ॥

यः प्रीणयेत् सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत् कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं यत्
एतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ६८ ॥

( सं० टी० ) सदाचरणात् पुत्रादित्रयं सकृतिनः प्राप्नुवंतीति दर्शयति—यः प्रीणयेदिति । यः सुचरितैः सच्चरितैः पितरं जनकं प्रीणयेत्संतोषयेत् स पुत्र इति नान्यः । यद्भर्तुरेव हितं कल्याणमिच्छति तत्कलत्रं भार्या । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । नान्यदिति शेषः । यदापादि आपत्काले च सुखे समाना क्रिया यस्य तदेव मितं सुहृत । 'अथ मित्रं सखा सुहृत्' इत्यमरः । एतत्त्रयं जगति लोके पुण्यकृतः सुकृतिनः लभंते प्राप्नुवंति । वसंततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६८ ॥

( भा० टी० ) जो अपने सच्चरित्रोंसे अपने पिताको प्रसन्न रक्खे वही पुत्र, जो अपने पतिका निरंतर हित चाहै वही स्त्री, और जो आपत्ति और सुख दोनोंमें समान भाव रक्खै वही मित्र है. जगत्में ये तीनों पुण्यवान्हीको मिलते हैं ॥ ६८ ॥

एको देवः केशवो वा शिवो वा एकं मित्रं भूपतिर्वा यतिर्वा ।
एको वासः पत्तने वा वने वा एका नारी सुन्दरी वा दरी वा ॥६९॥

( सं० टी० ) प्रवृत्तिनिवृत्तिमार्गप्रकारभेदमाह—एक इति । एको मुख्यो देवः

केशवो विष्णुर्वा शिवः शंकरो वा । एकं मुख्यं मित्रं भूपती राजा वा यतिः संन्यासी वा । एको मुख्यो वासो वसतिस्थानं पत्तने नगरे वा वनेऽरण्ये वा । एका मुख्या नारी भार्या सुंदरी सुरूपा दरी पर्वतगुहा वा । नाऽन्या सुखदेति भावः । शालिनीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६९ ॥

( भा० टी० ) एक देवको सेवन किया चाहिये, केशव हो वा शिव; एक मित्र किया चाहिये, राजा हो वा तपस्वी; एक जगह वास करना चाहिये, नगरमें हो वा बनमें; और एक सुंदरी स्त्रीसे प्रीति हो वा कंदरासे ॥ ६९ ॥

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्यापयन्तः
स्वार्थान् सम्पादयन्तो विततप्रियतरारम्भयत्नाः परार्थे ।
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान् दुर्जनान् दूषयन्तः
सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ॥ ७० ॥

( सं० टी० ) अस्मिन् जगति नम्रत्वादिगुणैर्युक्ता बहुमान्याः साधवो अर्चनीया भवंतीत्याह-नम्रेति । नम्रस्य भावो नम्रत्वं तेनोन्नमन्त उच्चा मान्या भवन्ति । स्वान् स्वकीयान् गुणान् परेषां गुणानां कथनैः सह ख्यापयंतः कथयंतः । स्वान् गुणान् स्वयं न वदंति । परेषां गुणानुवादाः क्रियन्ते तैरेव प्रसंगेन स्वगुणानुवर्णनं क्रियते इति कृत्वा स्वार्थान् संपादयन्तः । परस्यार्थे वितता विस्तृताः प्रियतराश्चारम्भाः कर्माणि यत्नाश्च येषां ते । दुर्जनांश्च क्षांत्यैव क्षमयैव दूषयंतः । आश्चर्येण सहिता साश्चर्या गतिर्येषां तथाभूताः जगति बहुमता मान्याः सन्तः कस्य नाभ्यर्चनीयाः पूज्या न भवंति ? । एवंभूताः संतः सर्वेषां पूज्या एवेति भावः । स्रग्धरावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७० ॥

( भा० टी० ) नम्रतासे ऊँचे होते हैं और परगुणकथन करनेसे अपना गुण प्रसिद्ध करते हैं और निरंतर विस्तारपूर्वक परकार्य करनेसे अपना कार्य संपादन कर लेते हैं और निन्दक दुष्टोंको अपनी क्षमाहीसे दूषित कर देते हैं; ऐसे आश्चर्यकारक आचरणवाले बहुमाननीय संतलोग जगतमें किसके पूजनीय नहीं हैं ? ॥ ७० ॥

इति सुजनप्रशंसा ।

भवन्ति नम्रास्तरवः फलोद्गमैर्नवांबुभिर्भूमिविलंबिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥७१

(सं० टी० ) परोपकारिणां स्वभावं वृक्षदृष्टांतेनाह-भवंतीति । य फलानामुद्गमाः प्रादुर्भावास्तैः तरवो वृक्षाः नम्रा भवंति । घना मेघाः नवा नूतनानि अंबूनि जलानि तैर्भूमिं विलंबन्ते इति भूमिविलंबिनो भवंति । त सत्पुरुषाः सज्जनाः समृद्धिभिरैश्वर्यैरनुद्धता भवंति । परोपकारिणां ए स्वभावः शीलमेवास्ति । वंशस्थं वृत्तम् । "जतौ तु वंशस्थमुदीरितं जरौ" इ लक्षणम् ॥ ७१ ॥

(भा० टी० ) जैसे फल होनेसे वृक्ष नम्र होते हैं, अथवा नवीन ज भरनेसे जैसे मेघ भूमिपर झुक जाते हैं, वैसेही सत्पुरुषभी संपत्ति पाके उ नहीं होते; किंतु नमते हैं. अर्थात् परोपकारी जीवोंका यह स्व वही है ॥ ७१ ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणापराणां परोपकारैर्न तु चंदनेन ॥ ७२ ॥

(सं० टी० ) शास्त्रश्रवणादियुक्तानां कर्णादीनां साफल्यमाह-श्रोत्रमिति श्रोत्रं कर्णः श्रुतेनैव शास्त्रश्रवणेनैव विभाति शोभते, न तु कुंडलेन कर्णभूष शोभते । तथा पाणिर्हस्तो दानेन विभाति, न कंकणेन । अपरंच करुण राणां दयापराणां कायो देहः परोपकारैः विभाति न तु चंदनादिना विभा तस्मात् पुरुषैः शास्त्रादिकमवश्यं सम्पादनीयमिति भावः । उपजातिर्वृत्तम् । ल पूर्वोक्तम् ॥ ७२ ॥

(भा० टी० ) कानकी शोभा शास्त्रश्रवणसे है; कुंडल पहिरनेसे न हाथकी शोभा दान करनेसे है; कंकन पहिरनेसे नहीं. करुणामय जन देहकी शोभा परोपकार करनेसे है; चंदन लगानेसे नहीं ॥ ७२ ॥

पापान्निवारयति योजयते हिताय
गुह्यं च गूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ७३ ॥

(सं० टी० ) सन्मित्रलक्षणं दर्शयति–पापादिति । पापात्पापकर्मान्निवारयति दूरीकरोति । हिताय सदाचरणाय योजयते गुह्यं गोप्यं च गूहति गोपयति । गुणान् प्रकटीकरोति । आपद्गतं विपद्गतं च काले समये न जहाति न त्यजयति । समये द्रव्यादिकं ददाति । इदं सन्मित्रलक्षणमिति संतः प्रवदंति कथयंति । वसंततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७३ ॥

( भा० टी० ) मित्रको पाप करनेसे वर्जित करै और उसके हितकी बातका उसे उपदेश करै; उसकी गुप्त बातको छिपावै; गुणोंको प्रगट करै; आपत्तिकालमें साथ न छोडै और समय पडे यथाशक्ति द्रव्यभी दे; संतोंने अच्छे मित्रोंका यह लक्षण कहा है ॥ ७३ ॥

पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकाशयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते सुकृताभियोगाः ॥ ७४ ॥

( सं० टी० ) संतः स्वयं परहितार्थमुद्योगं कुर्वंतीति दिनकरदृष्टांतेन दर्शयति–पद्माकरमिति । पद्माकरं सूर्यविकासिकमलानामाकरं समुदायं दिनकरः सूर्यः विकचीकरोति प्रफुल्लं करोति । 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः' इत्यमरः । तथैव चंद्रो रात्रिविकासिकैरवाणां कुमुदानां 'सिते कुमुदकैरवे' इत्यमरः । चक्रवालं पद्मसमुदायं विकाशयति विकसितं करोति । एवं जलधरो मेघोऽप्रार्थितः सन् जलं ददाति । यतः संतः स्वयं परहिते सुकृताभियोगाः अप्रार्थिताः संतः स्वयं परहितं कुर्वन्ति । तेषां स्वभाव एवायम् । वसंततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७४ ॥

( भा० टी० ) सूर्य विना याँचे स्वतः कमलके समूहको विकाशित करता है; चंद्रमा विना याँचे कुमुदके समूहको प्रफुल्लित करता है, और मेघभी विना याचना किये जल देता है; ऐसेही संतजन विना याँचेही पराये हितके हेतु आपसे आप उद्योग करते हैं ॥ ७४ ॥

एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।

तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नंति ये
ये निघ्नंति निरर्थकं परहितं ते के न जानीमहे ॥ ७५ ॥

( सं० टी० ) पुरुषाणां क्रियाचातुर्विध्यमाह-एक इति । स्वार्थं परित्यज्य त्यक्त्वा परार्थघटकाः परकार्यं कुर्वंति । ते सत्पुरुषाः उत्तमपुरुषा भवंतीत्यर्थः । स्वार्थस्याविरोधेनादौ स्वकार्यं कृत्वा पश्चात्परकार्यं ये कुर्वंति ते सामान्या मध्यमाः । ये स्वार्थाय परहितं निघ्नन्ति, ते अमी मानुषेषु राक्षसाः । कनिष्ठास्तु पुनरिति निश्चयेन ये निरर्थकं परहितं निघ्नंति, ते के न जानीमहे तेषां लक्षणं न ज्ञायते । ते त्वतिनिंद्या इति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७५ ॥

( भा० टी० ) सत्पुरुष वे हैं, जो अपना अर्थ छोड दूसरेके कार्यको साधते हैं; सामान्य पुरुष वे हैं, जो अपने और पराये दोनों कार्योंको साधन करते हैं, और मनुष्योंमें राक्षस ( अधम ) वे पुरुष हैं, जो अपने हितके अर्थ पराये कार्यको नष्ट करते हैं; और जो व्यर्थ पराये कार्यकी हानि करते हैं वे कैसे पुरुष हैं ? उन्हें हम नहीं जानते ॥ ७५ ॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ ७६ ॥

( सं० टी० ) साधूनां संतापमाप्तावपि मैत्री न नश्यतीति जलदृष्टांतेन दर्शयति-क्षीरेति । पुरा पूर्वं क्षीरेण दुग्धेन आत्मगतायोदकायाखिलाः स्वे गुणा हि निश्चयेन दत्ताः । अत उभयोर्मैत्री जाता । तदनंतरं तेन पयसोदकेन क्षीरे दुग्धे तापमवेक्ष्य दृष्ट्वा । आत्मा स्वदेहः कृशानौ हुतः । दुग्धे तप्तेऽन्तर्गतं जलं ज्वलति तदनंतरं स्वमित्रेण जलेन मदर्थमात्मा कृशानौ हुतः तर्ह्यहमपि पतिष्यामीति बुद्ध्या मित्रापदं दृष्ट्वा तत्क्षीरं पावकं गंतुमुन्मनः उत्कण्ठितमभवत् । पुनरपि तत् क्षीरं जलेन प्रोक्षितं सच्छाम्यति । 'उत्सिक्तं क्षीरं जलेन शाम्यति' इति लोके प्रसिद्धमेवेति भावः । एतद्युक्तमुचितम् यतः सतां मैत्री गुणास्तादृशा एव भवन्ति । शार्दूलविक्रीडितं वृत्तम् लक्षणं पूर्वोक्तम् ॥ ७६ ॥

( भा० टी० ) दूधमें जब जल मिला, तो उस दूधने अपना सब गुण और रूप अपने जलरूपी मित्रको दे दिया. फिर दूधमें ताप देखकर जलने अपना शरीर अग्निमें होम दिया. फिर दूधनेभी मित्रकी इस आपत्तिको देखकर अग्निमें गिरना चाहा, परंतु जलके छींटे पाकर अपने मित्रको आया जान ठंडा हो बैठ गया! यह उचितही है. सत्पुरुषोंकी मैत्री ऐसीही होती है ॥ ७६ ॥

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनः शिखरिणां गणाः शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो! विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ७७ ॥

( सं० टी० ) महात्मानः सर्वेषामाश्रयभूता भवंतीति सिंधुसाम्येनाह–इत इति । इतः एकतः देशे केशवो विष्णुः स्वपिति निद्रां करोति । इतस्तदीयद्विषां तद्वैरिणां दैत्यानां कुलं समूहस्तिष्ठति । इतश्च शरणार्थिनां शरणागतानां शिखरिणां पर्वतानां गणाः समूहाः शेरते । इतोऽपि वडवानलो वडवाग्निः समस्ताः सांवर्ताः प्रलयकारिणोऽग्नयस्तैः सह तिष्ठति । अहो इत्याश्चर्ये । सिंधोः समुद्रस्य वपुः शरीरं विततं विस्तृतमूर्जितमतिबलिष्ठं भरं भारं सहत इति भारसहमस्ति । महात्मानः समुद्रवदुपकारिणः सर्वाधाराश्रयभूता भवंतीति शेषः । पृथ्वी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७७ ॥

( भा० टी० ) समुद्रमें एक ओर शेषशायी विष्णु सोए हैं, एक ओर शरणार्थी पर्वतोंके समूह पडे हैं, एक ओर प्रलयकी अग्निसहित वडवानल जलको औटाय रहा है; परन्तु इन सबोंसे वह कुछ नहीं घबराता है. इससे यह जान पडा कि, समुद्रका शरीर बडा विशाल बलवान् और भार सहनेवाला है. भाव यह है कि–'सत्पुरुषभी समुद्रवत् होते हैं' ॥ ७७ ॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।

मान्यान् मानय विद्विषोऽप्यनुनय प्रख्यापय स्वान् गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत् सतां लक्षणम् ॥ ७८ ॥

( सं० टी० ) सतां लक्षणमाह–तृष्णामिति । तृष्णां स्पृहां छिंधि । क्षमां क्षांतिं भज सेवस्व । मदं दर्पं जहि । पापे पापकर्मणि रतिं प्रीतिं मा कृथाः मा कुरु । सत्यं ब्रूहि वद । साधूनां सज्जनानां पदवीं मार्गमनुयाहि अनुगच्छ । विद्वज्जनान् पण्डितजनान् सेवस्व । मान्यान् मानय । विद्विषोऽप्यनुनय सांत्वय । 'प्रणतिः स्यादनुनयं प्रणिपातश्च सांत्वनम्' इति कोशांतरम् । स्वान् स्वकीयान् गुणान् प्रख्यापय । कीर्तिं यशः पालय । दुःखिते दयां कृपां कुरु । एतत् सतां साधूनां लक्षणम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७८ ॥

( भा० टी० ) तृष्णाका छेदन करो; क्षमाका सेवन करो; मदका त्याग करो; पापसे वैर करो; सत्य बोलो; साधुजनोंकी मर्यादाको प्राप्त होवो; पंडितोंका सेवन करो; मान्य जनोंको मानो; शत्रुओंकोभी प्रसन्न रक्खो; अपने गुणोंको प्रसिद्ध करो; अपनी कीर्तिका पालन करो; और दुखियोंपर दया रक्खो; क्योंकि यही सत्पुरुषोंका लक्षण है ॥ ७८ ॥

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसंतः सन्ति सन्तः कियन्तः ॥ ७९ ॥

( सं० टी० ) स्वप्रकाशमानानां साधूनां दर्शनं दुर्लभमित्याह–मनसीति । मनसि अंतःकरणे वचसि भाषणे काये देहे पुण्यं सुकृतमेव पीयूषममृतं तेन पूर्णाः कायवाङ्मनोभिः सुकृतमेवाचरंति न पापमिति । उपकारश्रेणिभिरुपकारपंक्तिभिस्त्रिभुवनं प्रीणयंतस्तर्पयंतः सदा उपकारं कुर्वंति, नापकारम् । परेषां गुणास्तेषां परमाणून् पर्वतीकृत्य पर्वतप्रमाणान् कृत्वा । नित्यं निजहृदि स्वहृदये विकसंतः प्रकाशमंतः संतः सज्जनाः कियंतः विरलाः संति । तस्माचे परगुणेष्वेव दत्तदृष्टयो, न तु तेषां दोषेष्विति भावः । मालिनी वृत्तम् । "ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणम् ॥ ७९ ॥

( भा० टी० ) मन, वाणी और शरीरमें पुण्यरूपी अमृतसे भरे हुए,

त्रिभुवनको उपकारोंसे तृप्ति करनेवाले और परमाणुसरीखे अल्प पराये गुणोंको पर्वतसा बढ़ाके अपने हृदयमें प्रसन्न होनेवाले कोई विरलेही संत हैं ॥ ७९ ॥

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिताश्च तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिंबकुटजा अपि चन्दनाः स्युः ॥ ८० ॥

( सं० टी० ) परोपकारवंतः साधवः स्वगुणान् परेषु स्थापयंतीति मलयान्योक्त्या दर्शयति-किं तेनेति । किं तेन हेमगिरिणा मेरुणा रजताद्रिणा रौप्यगिरिणा हिमालयेन वा । यतोऽस्याश्रितास्तरवस्तरव एव भवन्ति नत्वात्मसदृशाः सुवर्णरूप्यरूपाः कृताः । अतस्ताभ्यां किं प्रयोजनम् । तस्मान्मलयाद्रिं बहु मन्यामहे । यतोऽस्याऽऽश्रयेण कंकोलनिम्बकुटजा वृक्षा अपि चंदनाः स्युश्चंदना एव भवन्ति । इति चंदनवृक्षाणां परोपकारः । वसंततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८० ॥

( भा० टी० ) उस सोनेके सुमेरुपर्वतसे क्या ? और चांदीके कैलाससे भी क्या होगा ? कि जिसके आश्रित वृक्ष सदा जैसेके तैसेही बने रहते हैं ! हम तो मलयाचलको श्रेष्ठ मानते हैं, कि जहां कंकोल, नीम और कुटजादि तीखे वृक्षभी चन्दनसमान हो जाते हैं ॥ ८० ॥

---

## अथ धैर्यप्रशंसा ।

रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥८१॥

( सं० टी० ) धीरपुरुषाः निश्चितार्थेषु यत्नं कुर्वंतीति समुद्रमथनोद्योगप्रवृत्तदेवदृष्टांतेन वर्णयति-रत्नैरिति । धीराः गंभीराः पुरुषाः निश्चितार्थात् अर्थकृतनिश्चयात् न विरमंति न विश्राम्यंति, किंतु आरब्धं कर्म न त्यजंतीत्यर्थः । अत्र दृष्टांतः । देवा महार्हैर्महार्घै रत्नैर्न तुतुषुः संतोषं न प्रापुः । मंथनसमये देवाः प्राप्तरत्ना अपि तोषं न प्रापुरिति भावः । तथा च भीमं भयंकरं विषं तेन भीतिं भयं न भेजिरे न सिषेविरे । भयंकरविषेणापि भीतिं न प्रापु-

रित्यर्थः । तु सुधाममृतं विना विरामं विश्रामं न प्रययुः न प्रापुः । प्राप्तव्यत्वेन निश्चितार्थरूपसुधां विना विरामं न प्राप्ता इति भावः । इंद्रवज्रा वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८१ ॥

( भा० टी० ) अनमोल रत्न पाकर देवताओंने असंतुष्ट हो समुद्रका मथना न छोडा और भयानक विषसेभी भयभीत होकर अपने उद्योगसे न चूके; विना अमृत निकाले विश्राम न लिया. इससे यह सिद्ध हुआ कि—"धीर लोग अपने निश्चित अर्थको विना सिद्ध किये बीचहीमें छोडके नहीं बैठ रहते" ॥ ८१ ॥

क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः ।
क्वचित् कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ८२ ॥

( सं० टी० ) कार्यार्थी पुरुषः सुखादिकं न गणयतीति दर्शयन्नाह-क्वचिदिति । क्वचित्कदाचिद्भूमौ पृथिव्यां शय्या शयनम् । क्वचिदपि च पर्यंके शयनं करोतीति शेषः । क्वचिच्छाकाहारः शाकभोजी । क्वचिदपि च शाल्योदने रुचिर्यस्य स शाल्योदनभोजी । क्वचित्कंथां वस्त्रविशेषं धारयतीति सः । क्वचिदपि च दिव्यं सुंदरं अम्बरं वस्त्रं धरतीति, स कार्यार्थी कार्येच्छुः मनस्वी विवेकी पुरुषो दुःखं न गणयति, च सुखं न गणयति । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८२ ॥

( भा० टी० ) कभी भूमिपर सो रहते, कभी अच्छे पलँगपर शयन करते; कभी साग पात खाके रह जाते, कभी अच्छे चावलादि पदार्थोंका भोजन करते; कभी गूदडी ओढके दिन बिताते, और कभी दिव्य वस्त्र धारण करते रहते हैं; तात्पर्य—कार्यार्थी विद्वान् पुरुष सुख व दुःख दोनोंको नहीं गिनते ॥ ८२ ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।

अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ८३ ॥

( सं० टी० ) सौजन्यादिविभूषणापेक्षया शीलमेवोत्तमं भूषणमिति दर्शयति-ऐश्वर्येति । सुजनता सौजन्यमैश्वर्यस्य विभूषणमलंकरणं भवति, प्राप्तैश्वर्ये सति सौजन्यं संपादनीयमिति भावः । शौर्यस्य वीर्यस्य वाक्संयमो वाङ्नियमः । सति शौर्ये वाचा तदनुद्घाटनं कार्यमित्यर्थः । ज्ञानस्य तत्त्वज्ञानस्योपशमः शांतिः । सति ज्ञाने शांतिरवश्यं संपादनीया इति भावः । श्रुतस्य शास्त्रश्रवणस्य विनयो नम्रता । शास्त्रश्रवणाद्विनयोऽवश्यं संपादनीय इत्यर्थः । वित्तस्य द्रव्यस्य पात्रे सत्पात्रे व्ययो दानम् । सति द्रव्ये सत्पात्रे दानमवश्यं कर्तव्यमिति भावः । तपसोऽक्रोधः क्रोधराहित्यम् । तपः कुर्वता पुरुषेण क्रोधो न कार्य इति भावः । प्रभवितुः समर्थस्य क्षमा क्षांतिः । निग्रहानुग्रहसमर्थेन क्षमाऽवश्यं स्वीकरणीया इति भावः । धर्मस्य धर्माचरणस्य निर्व्याजता कपटराहित्यम् । कपटेन धर्माचरणं न कार्यमिति भावः । सर्वेषामपि जनानां सर्वगुणकारणमिदं शीलं स्वभावो परं श्रेष्ठं भूषणमस्तीति शेषः । सर्वे गुणाः स्वभावतः सिद्धा भवंति । न तु शक्त्या इति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८३ ॥

( भा० टी० ) ऐश्वर्यका भूषण सज्जनता, शूरताका वाक्संयम अर्थात् अभिमानके वचन न कहना, ज्ञानका भूषण शांति, शास्त्र पढ़नेका विनय, धनका सुपात्रको देना, तपस्याका क्रोध न करना, प्रभुताका क्षमा, धर्मका भूषण निश्छलता है, और अन्य सब गुणोंका भूषण और कारण शील है ॥ ८३ ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥ ८४ ॥

( सं० टी० ) धीरपुरुषाः न्यायपथात्कदाचिदपि न प्रचलंतीति दर्शयति-निंदन्त्विति । नीत्यां नये निपुणाः कुशलाः पुरुषाः निंदंतु निंदां कुर्वंतु, यदि

वा अथवा स्तुवंतु । लक्ष्मीः संपत् यथेष्टं यथेच्छं समाविशत्वागच्छतु वा गच्छतु । अद्यैव मरणं मृत्युरस्तु वा युगांतरेऽन्ययुगेऽस्तु । परंतु धीरा गंभीरा पुरुषाः न्यायादन्यो यो मार्गस्तद्रहितस्तस्मात्पथो न्यायमार्गात् न्यायमार्ग विना अन्यत्र पदं पदसंक्रमणं न प्रविचलंति न गच्छंति । एवं पुरुषेण न्याय मार्गो न त्याज्य इति भावः । वसंततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८४ ॥

( भा० टी० ) नीति जाननेवाले चाहे निंदा करें वा चाहे स्तुति; औ लक्ष्मी चाहे घरमें बहुतसी आवे वा चाहे चली जाय; प्राण चाहे अभ जाँय चाहे कल्पांतमें; परंतु धीर लोग न्यायका मार्ग छोड़कर ए पगभी उससे बाहर नहीं चलते ॥ ८४ ॥

भग्नाशस्य करण्डपीडिततनोर्म्लानेंद्रियस्य क्षुधा
कृत्वाऽऽखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ ८५

( सं० टी० ) लोकानां वृद्धिक्षययोः प्रारब्धमेव कारणमिति सर्पदृष्टांते वर्णयति–भग्नाशेति । कश्चित् सर्पो व्यालग्राहिणा धृतः करण्डमध्ये निक्षि स्तस्य स्थितिं वदति । कथंभूतस्य सर्पस्य ? भग्नाशस्य अहमस्मान्न मोक्ष्यामी भग्ना आशा यस्य । पुनः करण्डपीडिततनोः । पुनः क्षुधया म्लानेंद्रियस्य । ए जाते सति दैववशात्कश्चिदाखुर्मूषकस्तत्रागत्य तत्करण्डस्य विवरं छिद्रं कृत्व नक्तं रात्रावंतः प्रविष्टः सन् भोगिनो मुखे पतितः । पश्चात्तस्याखोः पिशितेन सर्पस्तृप्तस्तेनैव छिद्रमार्गेण बहिर्यातः । अतो भो जनाः ! यूयं स्वस्थास्तिष्ठत दैवमदृष्टमेव नृणां वृद्धौ क्षये च कारणमस्ति । अदृष्टवशाद्यद्भविष्यति त विष्यति । एवं च सर्वोऽपि लोकः स्वप्रारब्धानुरूपेण फलं भुंक्ते इति भावः शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८५ ॥

( भा० टी० ) ऐसा सर्प जिसे जीवनकी आशा नहीं, पिटारेमें बंद र नेसे जिसका शरीर पीडित है, और क्षुधासे सब इंद्रियां शिथिल हो र हैं, उस सर्पके मुखमें मूषक रातको उस पिटारेमें छेद करके आपसे गिरा; त वह सर्पभी उस मूसेके मांससे तृप्त होकर उसी छेदके रस्ते निकल गय

सो हे लोगो ! देखो कि–'ऐसेही मनुष्योंके क्षय और वृद्धिमें दैवही कारण है' ॥ ८५ ॥

पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ८६ ॥

( सं० टी० ) कंदुकदृष्टांतेन विपत्तिं प्रस्तौति–पातित इति, यथा कराघातैः हस्तताडनैः कंदुकः पातितोऽपि पुनरूर्ध्वमुत्पतत्येव । तथा प्रायः बाहुल्येन साधुवृत्तानां सद्वृत्तीनां विपत्तयः अस्थायिन्यो भवंति । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ८६ ॥

( भा० टी० ) प्रायः सद्वर्तनसे चलनेवाले साधुलोगोंकी विपत्ति स्थिर नहीं रहती. जैसे हाथके पटकनेसे गेंद गिरनेपरभी ऊँचाही उडता है ॥८६॥

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्यमसमो बन्धुर्यं कृत्वा नाऽवसीदति ॥ ८७ ॥

( सं० टी० ) उद्यमकर्त्ता सर्वत्र सुखमाप्नोतीत्याह–आलस्यमिति । अलसस्य भावो आलस्यं उद्योगराहित्यम् । मनुष्याणां शरीरे तिष्ठतीति शरीरस्थो महान् रिपुः शत्रुः । हि निश्चयेन अस्ति । उद्यमेनोद्योगेन समो बंधुः न । यमुद्यदं कृत्वा जनः नाऽवसीदति दारिद्र्यादिदुःखं नानुभवतीत्यर्थः । अनुष्टुप् वृत्तम् ॥ ८७ ॥

( भा० टी० ) आलस्य मनुष्योंके शरीरमें महाशत्रु है. उद्योगसमान दूसरा बन्धु नहीं, कि जिसके करनेसे दुःख नहीं आता ॥ ८७ ॥

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चंद्रः ।
इति विमृशंतः संतः संतप्यंते न विप्लुता लोके ॥ ८८ ॥

( सं० टी० ) आपत्प्राप्तावपि संतो न संतप्यंते इत्याह–छिन्नोऽपीति । तरुर्वृक्षश्छिन्नोऽपि निकृत्तोऽपि पुना रोहति उत्पन्नो भवति । क्षीणोऽपि कलाक्षीणोऽपि चंद्रः पुनरुपचीयते वृद्धिं प्राप्नोति । इत्यनेन प्रकारेण विमृशंतः विचारयंतस्ते प्रसिद्धाः संतः साधवः विपदा आपदा न संतप्यंते दुःखं नाप्नुवंति । आर्या वृत्तम् ॥ ८८ ॥

( भा० टी० ) "छाटाहुआ वृक्ष फिर बढ़कर फैल जाता है और चंद्रमा

क्षीण होकरभी धीरे २ बढकर फिर पूर्ण हो जाता है" ऐसा विचार करनेवाले संत जन विपत्तिसे संतापको नहीं प्राप्त होते ॥ ८८ ॥

इति धैर्यप्रशंसा ।

---

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः ।
इत्यैश्वर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे
तद्व्यक्तं वरमेव दैवशरणं धिग्धिग्वृथा पौरुषम् ॥ ८९ ॥

(सं० टी०) दैवे प्रतिकूले सति पुंप्रयत्नो विफल इति इंद्रदृष्टांतेनाह-नेतेति । यस्य इंद्रस्य बृहस्पतिर्गुरुः नेता नायकोऽस्तीति शेषः । वज्रं कुलि प्रहरणमायुधम् । सुरा देवाः सैनिकाः । दुर्गं स्वर्गः । हरेर्विष्णोरनुग्रहः कृपा किलेति प्रसिद्धम् । वारणो हस्ती ऐरावतः । इत्यनेन प्रकारेण ऐश्वर्यं च ब च ताभ्यामन्वितोऽपि बलभिदिंद्रः परैः शत्रुभिः संगरे युद्धे भग्नः । तत्तस्मा ननु निश्चितं दैवमेव शरणं रक्षिता । 'शरणं गृहरक्षित्रोः' इत्यमरः । इति यु तर्हि दैवहीनं पौरुषं वृथा धिग्धिगिति । दैवेन विना पुरुषप्रयत्नो निष्फ इति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८९ ॥

(भा० टी०) बृहस्पति ऐसे मंत्री, वज्रऐसा शस्त्र, देवताओंकी से ऐसी सेना, स्वर्ग ऐसा गढ, ऐरावतसा चढनेको हाथी और तिस विष्णुका पूर्ण अनुग्रह तौभी ऐसे आश्चर्यकी सामग्रीवाले इंद्र शत्रुओं संग्राममें हारतेही रहे. इससे यह सिद्ध भया कि, दैवही मुख्यकर शरणके योग्य है. पुरुषार्थ वृथा है और उसको धिक्कार है ॥ ८९ ॥

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ९० ॥

(सं० टी०) बुद्धिमंतः पुरुषाः सुविचारपूर्वकमेव कर्म कुर्वंतीति प्र सयन्नाह-कर्मायत्तमिति । यदि पुंसां फलं सुखदुःखादिकं कर्मायत्तं क धीनमस्ति । यथा कर्म तथा सुखदुःखादिकं प्राप्नोतीत्यर्थः । क नुसारिणी कर्मानुगामिनी सती वा असती बुद्धिरस्ति तथापि सुधि

बुद्धिमता सुष्ठु विचार्यैव कर्म कुर्वता भाव्यम् । धीमता पुरुषेण सुविचारपूर्वकमेव कर्माचरणीयमिति भावः । अनुष्टुप् वृत्तम् ॥ ९० ॥

( भा० टी० ) यद्यपि पुरुषोंको फल कर्मके अनुसार होता है और बुद्धिभी कर्मके अनुसार हो जाती है, तौभी पण्डितोंको काम विचारहीके करना चाहिये ॥ ९० ॥

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन् देशमनातपं विधिवशात्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यांत्यापदः ॥ ९१ ॥

( सं० टी० ) भाग्यरहितः पुरुषः कुत्रापि गतो दुःखमेव लभत इति खल्वाटदृष्टांतेन दर्शयति-खल्वाट इति । यथा खल्वाटः केशरहितः पुरुषो बहिरटन् दिवसेश्वरस्य सूर्यस्य किरणैर्मस्तके मूर्ध्नि संतापितः सन् अनातप-मूष्माविरहितं देशं वाञ्छान्निच्छन्विधिवशाद्दैववशात्तालस्य तालवृक्षस्य मूलं गतः । तत्रापि तस्मिन् स्थलेपि दैववशादकस्मादेव पतता महाफलेन अस्य खल्वाटस्य शिरः मस्तकं सशब्दं यथा स्यात्तथा भग्नमभूदिति शेषः । तथा प्रायो बाहुल्येन यत्र प्रदेशे भाग्यरहितो भाग्यविहीनः पुरुषो गच्छति । तत्रैव तं प्रत्यापदो यांति आगच्छांति । भाग्यहीनः पुरुषः तालपतनजन्यं खल्वाटसदृशं दुःखमनुभवतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ९१ ॥

( भा० टी० ) खल्वाट अर्थात् चँदुये पुरुषका मस्तक सूर्यकी किरणसे जलने लगा, तब वह छायाकी इच्छा करता हुआ दैवसंयोगसे तालके वृक्षके नीचे जाकर खडा हुआ. तहां जातेही शीघ्र बडा फल ऊपरसे गिरा, तिससे उसका शिर फूटा, तिसका बडा शब्द हुआ! इससे यह सिद्ध हुआ कि-"अभागा पुरुष जहां भाग जाता है, तहां विपत्तिभी उसके साथ जाती है!" ॥ ९१ ॥

शशिदिवाकरयोर्ग्रहपीडनं गजभुजङ्गमयोरपि बन्धनम् ।
मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवानिति मे मतिः ९२

( सं० टी० ) दैवमेव बलीय इति सदृष्टांतं वर्णयति-शशिदिवाकरयोरिति ।

गजो द्विपः भुजंगमः सर्पः तयोऽरपि बंधनं भवति । शशी चंद्रः दिवाकरः सूर्यस्तयोर्ग्रहेण राहुणा पीडनम् । मतिमतां बुद्धिमतां दरिद्रतां दारिद्र्यं विलोक्य दृष्ट्वा विधिर्दैवं बलवान् बलिष्ठोऽस्तीति मे मतिर्बुद्धिः निश्चयोस्ति । अहो इत्याश्चर्ये । द्रुतविलंबितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९२ ॥

( भा० टी० ) हाथी और सर्प इन दोनोंको बन्धनमें देखते हैं, चंद्रमा और सूर्यकोभी राहुग्रहसे पीडित देखते हैं और बुद्धिमानोंको दरिद्र देखते हैं. इससे हमारे मतमें विधाताही बलवान् देख पडता है ॥ ९२ ॥

सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ ९३ ॥

( सं० टी० ) ब्रह्मणो अज्ञानतामाह–सृजतीति । तावदादौ विधाता अशेषा ये गुणास्तेषां आकरं खनिं अशेषगुणपूर्णं भुवः पृथिव्याः अलंकरणं भूषणभूतं पुरुषरत्नं सृजति । तदपि पुरुषरत्नमपि तत्क्षणभंगि तत्क्षणनाशशीलं अल्पायुः करोति चेदहह इति खेदे कष्टं यथा भवति तथा इयं विधेर्ब्रह्मणो अपंडितता अज्ञानताऽस्ति । वृत्तं पूर्वोक्तम् ॥ ९३ ॥

( भा० टी० ) पहिले विधाता पुरुषरत्नको सब गुणोंकी खानि और पृथ्वीका भूषण सरजता है, परंतु उसका शरीर क्षणभंगुर करता है यह बडे कष्टकी बात है; और इसमें विधाताकी मूर्खता जान पडती है ॥ ९३ ॥

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥ ९४ ॥

( सं० टी० ) विधिलिखितं को मार्जयेदिति करीरवृक्षदृष्टांतेनाह–पत्रमिति । करीरविटपे करीरसंज्ञकवृक्षे यदा पत्रं पर्णं नैव भवति तदा वसंतस्य किं दोषः ? । यदि उलूको दिवाभीतो दिवाऽपि दिवसेऽपि नाऽवलोकते तदिदं सूर्यस्य दूषणं किम् ? । चातकमुखे धारा जलधारा नैव पतंति, तर्हि मेघस्य दूषणं किम् ? । किंतु यद्यस्मात् पूर्वं विधिना ब्रह्मणा जन्मकाले ललाटे

लिखितं तन्मार्जितुं कः क्षमः समर्थः? न कोऽपि। वसंतसमये करीरवृक्षस्य पत्रोत्पत्तिर्नास्ति। तस्मात्प्रारब्धमेव बलीय इति भावः। शार्दूलविक्रीडितं वृत्तम्। लक्षणं पूर्वोक्तम्॥ ९४॥

(भा० टी०) करीरवृक्षमें पत्ते नहीं लगते तो इसमें वसंतऋतुका क्या दोष है? घूघू पक्षी दिनमें नहीं देखता तो सूर्यका इसमें क्या दोष है? और जलकी धारा जो चातक पक्षीके मुखमें नहीं पडती तो इसमें मेघका क्या दोष है? इससे यह जान पडता है कि, पहले विधाताने जो ललाटमें लिख दिया है, उसे मिटानेकी किसकी सामर्थ्य है?॥ ९४॥

इति दैवप्रशंसा।

## अथ कर्मप्रशंसा।

नमस्यामो देवान्न तु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः।
फलं कर्मायत्तं किममरगणैः किंच विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति॥ ९५॥

(सं० टी०) बलवत्तरं प्राचीनकर्म इति प्रशंसन् श्लोकयुगलेनाह—नमस्याम इति। देवानिंद्रादीन्वयं नमस्यामो नमस्कुर्मः। तर्हि तेऽपि हतविधेर्वशगा अदृष्टाधीनाः स्वातंत्र्येण फलं दातुमशक्ताः। अथ विधिर्वंद्यः, सोऽपि प्रतिनियतं यत्कर्म तस्यैकस्य फलं ददाति, न त्वन्यफलं दातुं शक्तः। फलं तावत्कर्मायत्तं कर्माधीनम्। यदि चेत्तर्हि अमरैः देवैः विधिना अदृष्टेन च किमतस्तत्कर्मभ्यो नमः। येभ्यो विधिरपि न प्रभवति। शिखरिणीवृत्तम्। लक्षणं पूर्वोक्तम्॥ ९५॥

(भा० टी०) देवताओंको हम नमस्कार करते हैं, परन्तु उनको विधाताके वशमें देखते हैं; इसलिये विधाताहीको नमस्कार करते हैं. पर विधाताभी हमारे पूर्वनिश्चित कर्मके अनुसार फल देता है. फिर जब फल और विधाता दोनों कर्मके आधीन हैं, तो देवता और विधातासे क्या काम है? इस कारणसे कर्महीको नमस्कार है क्योंकि विधाताकाभी सामर्थ्य जिसपर नहीं चलता!॥ ९५॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ९६ ॥

( सं० टी० ) ब्रह्मेति । येन कर्मणा ब्रह्मांडमेव भांडं भाजनं तस्योदरे ब्रह्मा कुलालवत्कुंभकारवन्नियमितो नियंत्रितः, जगन्निर्माणे इति शेषः । यथा कुलालो नानाविधभांडरचनां करोति, तथा ब्रह्माऽपि अनेकविधां सृष्टिनिर्माणरचनां करोतीत्यर्थः । येन विष्णुः हरिः दशावतारा मत्स्यादयो तन्मध्ये यद्गहनं दुःखं तदेव महत्संकटं तस्मिन्क्षिप्तः पातितः । प्रेरित इति शेषः । तथा येन रुद्रो शंकरः कपालं नरकपालं तेन युक्तो यः पाणिपुटको करसंपुटकस्तस्मिन् या भिक्षा तदर्थमटनं भ्रमणं कारितः । तथा सूर्यो नित्यमेव गगने आकाशे भ्राम्यति भ्रमणं करोति । तस्मै कर्मणे नमोऽस्तु । शार्दूलविक्रीडितं वृत्तम् ॥ ९६ ॥

( भा० टी० ) जिस कर्मने ब्रह्माको कुम्हारकी नाईं निरंतर ब्रह्मांड रचनाके हेतु बनाया, और विष्णुको वारंवार दश अवतार ग्रहण करने के संकटमें डाला, और रुद्रको कपाल हाथमें लेकर भिक्षा मांगनेके कष्टमें रक्खा, और सूर्यको आकाशमें नित्य भ्रमणचक्रमें डाला, उस कर्मको प्रणाम है ॥ ९६ ॥

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु संचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९७ ॥

( सं० टी० ) सर्वत्र भाग्यमेव फलति, । नाकृतिरिति वृक्षदृष्टांतेन वर्णयति नैवेति । आकृतिः स्वरूपं नैव फलति नैव कुलं सत्कुलम् । शीलं सद्वृत्तं नैव विद्याऽपि शास्त्राभ्यासोऽपि नैव । यत्नकृता प्रयत्नकृता सेवा शुश्रूषा नैव किंतु पूर्वमाचरितं यत्तपस्तेन संचितानि पुरुषस्य भाग्यानि काले समये फलंति यथा वृक्षाः काले फलंति तद्वदित्यर्थः ॥ ९७ ॥

( भा० टी० ) पुरुषकी सुंदर आकृति कुछ फल नहीं देती और न उत्तम कुल, शील, विद्या और बड़े यत्नसे की हुई सेवाभी फल नहीं देती; किन्तु एक पूर्वतपस्याके संचित किये हुए भाग्यही मनुष्यको समय समयपर वृक्षकी नाईं फल देते हैं ॥ ९७ ॥

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥९८॥

( सं० टी० ) पूर्वकृतानि पुण्यानि इतस्ततो पुरुषं रक्षंतीत्याह-वने इति । पुरा पूर्वं कृतानि पुण्यानि सुकृतानि । वने अरण्ये । रणे युद्धे । शत्रुश्च जलं च अग्निश्च तेषां मध्ये महार्णवे समुद्रे वा पर्वतस्य मस्तके मूर्ध्नि सुप्तं निद्रितं प्रमत्तं आसवादिना वा । अथवा विषमे नतोन्नतभूमौ स्थितं पुरुषं रक्षंति । तस्मात्सुकृतमेव सदा पुरुषैः आचरणीयमिति भावः । उपेंद्रवज्रावृत्तम् । " उपेन्द्रवज्रा जतजास्ततो गौ " इति लक्षणम् ॥ ९८ ॥

( भा० टी० ) वन, रण, शत्रु, जल, अग्नि और समुद्रमें वा पर्वतके मस्तकमें सोते हुए असावधान और विषम अवस्थामें स्थित हुए पुरुषको पूर्वजन्मके पुण्यही रक्षा करते हैं ॥ ९८ ॥

या साधूंश्च खलान् करोति विदुषो मूर्खान् हितान् द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो ! व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः॥९९॥

( सं० टी० ) पुरुषेणावश्यं सत्क्रिया कर्तव्येति तत्फलं प्रशंसयन्नाह-या साधूनिति । या सत्क्रिया खलानपि साधून् करोति । मूर्खान् विदुषः पंडितान् करोति । द्वेषिणो शत्रून् हितान् करोति । हालाहलममृतं परोक्षं प्रत्यक्षं करोति । तां सत्क्रियां भगवतीमाराधय यदि वांछितं फलं भोक्तुमिच्छसि । हे साधो ! विपुलेषु गुणेषु व्यसनैः प्रीतिभिरास्थां यत्नं ' आस्थानीयत्नयोरास्था ' इत्यमरः । वृथा मा कृथाः मा कुरु । सत्क्रियां विना केवलैर्गुणैर्न किंचित्फलम् । अथवा विपरीतमस्मिन्मोहान्धो गुणेष्वास्थां वृथा मा कृथाः मा कुरु ।

सत्क्रियां भगवतीमाराधय, सत्क्रियां विनाऽस्मिन्युगे फलं न भवतीति भावः। शार्दूलविक्रीडितं वृत्तम्। लक्षणं पूर्वोक्तम् ॥ ९९ ॥

( भा० टी० ) जो सत्क्रिया खलोंको साधुता देती है और मूर्खोंको पंडित करती है, शत्रुओंको मित्र, गुप्त विषयोंको प्रगट और विषको अमृत कर देती है, उस सत्क्रियारूपी भगवती देवीकी आराधना करो. हे साधो! यदि वांछित फल भोगा चाहो तो कष्ट और हठसे बहुतसे गुणोंके साधनमें वृथा श्रम न करो ॥ ९९ ॥

गुणवदगुणवद्वा कुर्वता कार्यमादौ
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १०० ॥

( सं० टी० ) पंडितेन कार्यस्य परिणामपर्यंतं विचारं कृत्वा कर्तव्यमि त्याह-गुणेति । गुणवद्गुणैर्युतमथवाऽगुणवत्कार्यं कुर्वता कर्तुमिच्छता पंडितेन विवेकिनाऽऽदौ पूर्वमेव यत्नतः प्रयत्नात् कार्यस्याकार्यस्य वा परिणतिः परिणामः अवधार्या विचारणीया । सर्वं कार्यजातं शुभोदर्कं वीक्ष्यारम्भणीयमिति भावः । अन्यथा अतिरभसेनातित्वरया कृतानां कर्मणां विपाकः परिणाम आविपत्तेः मरणपर्यंतं हृदयदाही शल्यतुल्यो शंकुतुल्यो भवति । 'वा पुंसि शल्यं शंकुर्ना' इत्यमरः । बाणाग्रजनितक्षततुल्यदुःखद इतिवत् । मालिनी वृत्तम् लक्षणं पूर्वोक्तम् ॥ १०० ॥

( भा० टी० ) कोई कार्य योग्य हो अथवा अयोग्य, परंतु करनेवाले पंडितको उसका परिणाम पहिलेसे विचार लेना चाहिये; क्योंकि बिना विचारे अतिशीघ्रतासे काम करनेका फल मरणपर्यंत हृदयको दाहता है और कंटककी नाईं खटकता है ॥ १०० ॥

स्थाल्यां वैडूर्यमय्यां पचति च लशुनं चंदनैरिंधनौघैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्य हेतोः ।
छित्त्वा कर्पूरखंडान् वृतिमिह कुरुते कोद्रवाणां समंतात्

प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मंदभाग्यः ॥१०१॥

( सं० टी० ) अस्यां पृथिव्यां जन्म प्राप्य पुरुषेण तप एवाचरणीयं, नान्यदिति साभिप्रायमाह—स्थाल्यामिति । मनुजो मनुष्यः इमां कर्मभूमिं प्राप्य यस्तपः स्वधर्मनिष्ठां सत्क्रियां न चरति, स मंदभाग्यः स्वहितं न जानाति । अत्र दृष्टांतः । यथा वैडूर्यमय्यां रत्नखचितायां सुवर्णस्थाल्यां लशुनं चंदनकाष्ठैः पचति पाकं करोति । यथा सुवर्णमयैर्लांगलाग्रैर्हलाग्रैर्वसुधां पृथ्वीं विलिखति । भूमिं शुद्धां करोति । किमर्थमर्कमूलस्य हेतोरर्कवृक्षाणां रोपणार्थम् । कर्पूरखंडान् कर्पूरवृक्षान् छित्वा तैः समंतात् कोद्रवाणां वृतिमावरणं कुरुते । तथेमां भूमिं प्राप्य तपस्त्यक्त्वा विषयभोगान् भुंक्ते इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०१ ॥

( भा० टी० ) वह पुरुष मानों मरकतमणिके बरतनमें लशुनको चंदनके ईंधनसे सिझाता है और खेतमें सोनेका हल चलाकर आंक वृक्षकी जड़को लगानेके हेतु निकालता है और कपूरके वृक्ष काटकर कोदोंके चारों ओर वन्दनबार बनाता है, जो मंदभागी मनुष्य इस कर्मभूमिमें आके तप नहीं करता ॥ १०१ ॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवनादिसकला विद्याः कलाः शिक्षतु ।
आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ? ॥१०२॥

( सं० टी० ) यदवश्यं भावि तद्भवत्येव इत्याह—मज्जेति । अंभसि जले मज्जतु । मेरुशिखरं यातु । आहवे युद्धे शत्रुन् जयतु । वाणिज्यं कृषिसेवनादि सकला विद्याः कलाश्च शिक्षतु अभ्यासं करोतु । विपुलं पुष्कलमाकाशं यातु गच्छतु । खगवत् पक्षिवत् । एतादृशं नानाविधं परमुत्कृष्टं प्रयत्नं कृत्वाऽपि इह लोके कर्मवशतो यदभाव्यं तन्न भवति । भवितव्यं भवत्येव । भावस्य नाशः कुतः ? प्रयत्नं विनाऽपि भवति । शार्दूलविक्रीडितं वृत्तम् ॥ १०२ ॥

( भा० टी० ) चाहे समुद्रमें डूबो वा चाहे सुमेरुके सिरपर चढ़ जावो; चाहे घोर संग्राममें शत्रुओंको जीतो वा चाहे बनिज, खेती, सेवा आदिक

विद्याओंकी नाना कला करो और आकाशमें पक्षीकी नाईं बड़े यत्नसे उड़े फिरो; पर अनहोनी नहीं होती और जो कर्मवश होनी है सो नहीं टलती ॥ १०२ ॥

भीमं वनं भवति तस्य पुरं प्रधानं
सर्वो जनः सुजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्याऽस्ति पूर्वसुकृतं विपुलं नरस्य ॥ १०२ ॥

( सं० टी० ) पूर्वसंचितकर्मवशात्सर्वमप्यतर्क्यं संभवतीत्याह–भीमं वनमिति । यस्य नरस्य पूर्वं सुकृतं विपुलं पुष्कलं भवति । तस्य भीमं भयंकरं वनमरण्यं प्रधानं श्रेष्ठं पुरं नगरं भवति । सर्वो जनो दुर्जनोऽपि सुजनतां याति । कृत्स्ना समग्रा भूः संत उत्तमा निधयो रत्नानि च तैः पूर्णा भवति । वसंततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०३ ॥

( भा० टी० ) जिस पुरुषका पूर्वजन्मका बहुतसा पुण्य है, उस पुरुषके लिये भयानक बन अच्छे नगरकी नाईं हो जाता है और सब जन उसके मित्र हो जाते हैं और सम्पूर्ण पृथ्वी उसके निकट रत्नोंसे पूर्ण हो जाती है ॥ १०३ ॥

---

# अथ प्रत्यन्तरे श्लोकाः ।

को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः संगतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा काऽनुव्रता किं धनं
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ १०४

( सं० टी० ) पुरुषैर्विहितं किंकिमाचरणीयमिति प्रश्नोत्तरमालिकयाऽऽह क इति । लाभोऽभीष्टसिद्धिः को गुणिनां पुरुषाणां संगमः समागमः । असुखं किं प्राज्ञादितरा मूर्खास्तैः सह संगतिः । हानिः का समयच्युतिः । यस्मिन् समये यदवश्यं कर्तव्यमेव तन्न कृतं समयो गतः सैव हानिरित्यर्थः । निपुण

ज्ञातृता का या धर्मतत्त्वे रतिः प्रीतिः । शूरः कः विजितानींद्रियाणि येनासौ । प्रियतमा का याऽनुव्रता पतिव्रता । धनं किं विद्या शास्त्राभ्यासः । सुखं किं अप्रवासगमनम् । राज्यं किं आज्ञाफलम् । ययाऽऽज्ञया सर्वं शुभाशुभं भवति । सामर्थ्यं तदेव राज्यम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०४ ॥

( भा० टी० ) लाभ क्या है ? गुणियोंकी संगति; दुःख क्या ? मूर्खोंका संग; हानि क्या ? समयपर चूकना; निपुणता क्या ? धर्ममें रति होना; शूर कौन है ? जिसने इंद्रियोंको वशमें किया; स्त्री कौन अच्छी है ? जो अनुकूल पतिव्रता हो; धन क्या है ? विद्या; सुख क्या है ? प्रवासमें न जाना; राज्य क्या है ? अपनी आज्ञाका चलना ॥ १०४ ॥

मालतीकुसुमस्येव द्वे गतीह मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ १०५ ॥

( सं० टी० ) 'मनस्वीपुरुषस्य द्वे दशे भवतः' इति मालतीकुसुमदृष्टांतेनाह—मालतीति । मालत्या जातिलतायाः कुसुमं पुष्पं तस्येव मनस्विनो विवेकिनः पुरुषस्य द्वे गती दशे इह स्तः । यथा पुष्पेण सर्वस्य लोकस्य मूर्ध्नि मस्तके स्थीयते वा अथवा वनेऽरण्य एव शीर्यते शीर्णं भूयते । तद्वन्मनस्विनो मनुष्याः लोकमान्या गृहे वा वनेऽरण्यवासिनो भवंतीत्यर्थः । वृत्तमनुष्टुप् ॥१०५॥

( भा० टी० ) मालतीकुसुमके समान मनस्वी पुरुषोंकी दो गतियां हैं; जैसे—या तो सबके मस्तकपर चढे या वनके वनहीमें सूख जाँय ॥१०५॥

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ।
परपरिवादनिवृत्तैः क्वचित्क्वचिन्मंडिता वसुधा ॥ १०६ ॥

( सं० टी० ) इह खल्वस्यां भूमौ सौजन्यस्थितेर्विरलत्वमाह—अप्रियेति । अप्रियवचनदरिद्रैः अप्रियवचनेषु दरिद्रास्तैः । प्रियवचनेषु आढ्याः संपन्नास्तैः । स्वदारेषु परितुष्टैः । परापवादात्परनिंदाया निवृत्ता एवमादिभिर्गुणैर्युक्तैः पुरुषैः । क्वचित्क्वचित्स्थले वसुधा मंडिता शोभायमानाऽस्ति । आर्यावृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०६ ॥

( भा० टी० ) अप्रिय वचनके तो दरिद्र, प्रिय वचनोंसे संपन्न, अपनी ही स्त्रीसे संतुष्ट और पराई निंदासे रहित जो पुरुष हैं उनसे कहीं कहीं पृथ्वी शोभायमान है, अर्थात् ऐसे पुरुष सब ठौर नहीं होते! ॥ १०६ ॥

कदर्थितस्याऽपि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा याति कदाचिदेव॥ १०७॥

( सं० टी० ) धीरपुरुषस्य धैर्यं घातयितुं कोऽपि न समर्थ इति सदृष्टांतमाह–कदर्थितेति । कदर्थितस्य कष्टं प्राप्तस्य धैर्ये वृत्तिर्वर्तनं यस्य तस्य पुरुषस्य धैर्यरूपो यो गुणः सः प्रमार्ष्टुं नाशं प्रापयितुं केनापि न शक्यते । अत्र दृष्टान्तः । अधः कृतमुखस्य वह्नेः शिखा कदाचिदप्यधो न याति किंतूर्ध्वमेव गच्छति । तस्माद्धीरपुरुषः दुःखसमये प्राप्तेऽपि धैर्यं न त्यजतीति भावः। उपजातिर्वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०७ ॥

( भा० टी० ) क्लेशित जन यदि धैर्यवृत्तिवाला हो तोभी उसकी धैर्यवृत्तिको कोई नहीं मिटा सक्ता. जैसे–प्रज्वलित अग्निको उलटा कर दे तो भी उसकी ज्वाला ऊपरहीको रहती है. नीचे नहीं जाती ॥ १०७ ॥

कान्ताकटाक्षविशिखा न दहन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ १०८ ॥

( सं० टी० ) धीरः कृत्स्नं जगद्वशीकरोतीत्याह–कांताकटाक्षेति । यस्य पुरुषस्य चित्तमन्तःकरणं कांतायाः स्त्रियाः कटाक्षाः नेत्रप्रांतास्त एव विशिखा बाणास्ते न दहंति । तथा यस्य चित्तं कोपः क्रोध एव कृशानुरग्निस्तस्य तापः संतापो न निर्दहति न भस्मीकरोति । तथा भूरि बहवो विषया लोभ एव पाशबंधनानि तैर्यस्य चित्तं न कर्षंत्याकर्षयंति । स धीरः पुरुषः कृत्स्नं सर्वमिदं लोकत्रयं जयति वशीकरोति । एवं च धीरपुरुषेण कामादयस्त्याज्या इति भावः । वसंततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०८ ॥

( भा० टी० ) स्त्रियोंके कटाक्षरूपी बाण जिसके चित्तको नहीं बेधते, क्रोधरूपी अग्निकी आंच जिसके चित्तको नहीं जलाती और

इंद्रियोंके विषय लोभफांसीमें डालकर जिसके चित्तको नहीं खींचते, वही धीर पुरुष तीनों लोकोंको जीतता है ॥ १०८ ॥

एकेनापि हि शूरेण पादाक्रान्तं महीतलम्।
क्रियते भास्करेणैव परिस्फुरिततेजसा ॥ १०९ ॥

( सं० टी० ) एक एव शूरः कृत्स्नं जगद्वशीकरोतीति भास्करदृष्टांतेनाह—एतेनेति । यथा परितः आसमन्तात् स्फुरितं देदीप्यमानं तेजो यस्य तेन भास्करेण सूर्येणैव महीतलं भूतलं पादैः किरणैश्चाक्रांतं व्याप्तं क्रियते । तथा एकेनाद्वितीयेनापि शूरेण वीरेण महीतलं पृथिवीतलं पादेन चरणेनाऽऽक्रांतं व्याप्तं क्रियते । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ १०९ ॥

( भा० टी० ) एकही अकेला शूर सारी पृथ्वीको पांवके तले दबा कर वश कर लेता है. जैसे अकेला तेजस्वी सूर्य सारे जगत्को प्रकाशित करता है ॥ १०९ ॥

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणात्।
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरंगायते ॥
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते।
यस्यांगेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ ११० ॥

( सं० टी० ) लोकप्रियपुरुषस्य सर्वेऽप्यनुकूला भवंतीति दर्शयति—वह्निरिति । यस्य पुरुषस्यांगे अखिललोकानां वल्लभतमं प्रियं शीलं सद्वृत्तं समुन्मीलत्युज्जृंभते तस्य वह्निरग्निरुष्णस्वभावोऽपि जलायते जलमिवाचरति जलवच्छीतलो भवतीति शेषः । तथा जलनिधिः समुद्रः कुल्यायते अल्पा सरित्तद्वदाचरति । सुतरो भवतीत्यर्थः । तत्क्षणात्क्षणमात्रान्मेरुपर्वतः स्वल्पशिलायते अल्पशिलावदाचरति । महानपि मेरुः स्वल्पपाषाणवद्भवतीत्यर्थः । मृगपतिः सिंहः सद्यः कुरंगायते कुरंगो हरिणस्तद्वदाचरति । अतिक्रूरोऽपि सिंहः क्रौर्यं त्यजतीत्यर्थः । व्यालः सर्पोऽपि माल्यगुणायते माल्यगुण इवाचरति अतिक्रूरस्वभावयुक्तोऽपि सर्पः क्रौर्यं त्यजतीत्यर्थः । विषरसः पीयूषवर्षायते पीयूषरसोऽमृतरसस्तस्य वर्षो वर्षणं तद्वदाचरति । अतिदुर्धरोऽपि विषरसः स्वमारकं गुणं त्यजतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ११० ॥

( भा० टी० ) अग्नि उस पुरुषको जलकी नांई जान पडता है समुद्र स्वल्प नदीसा उसको तत्काल दीख पड़ता है, मेरु पर्वत स्वल्प शिलाकी नांई बूझ पड़ता है, सिंह शीघ्रही उसके आगे हिरन बन जाता है, सर्प उसके हेतु फूलकी मालासा बन जाता है, और विष रस उस पुरुषको अमृतकी वृष्टिकी नांई हो जाता है, जिस पुरुषके अंगमें समस्त जगत्का मोहनेवाला शील प्रकाशमान है ॥ ११० ॥

लज्जागुणौघजननीं जननीमिव स्वा-
मत्यन्तशुद्धहृदयामनुवर्तमानाम् ।
तेजस्विनः सुखमसूनपि संत्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १११ ॥

( सं० टी० ) तेजस्विनः पुरुषाः स्वप्रतिज्ञां न त्यजंतीति स्वजननीदृष्टांते नाह—लज्जेति । सत्यमेव व्रतं तदेव व्यसनं येषां ते । तेजस्विनः प्रभावंत पुरुषाः प्रतिज्ञां न त्यजन्ति । पुनरन्यां न कुर्वन्ति । कथंभूतां प्रतिज्ञाम् ? ल ज्जायाः ये गुणास्तेषामोघः समुदायस्तस्य जननीम् । पुनः कथंभूताम् ? स्वां स्व कीयां जननीमिव अत्यन्तशुद्धहृदयामनुवर्तमानाम् । अतस्तेजस्विनः सुखम सून् प्राणानपि त्यजन्ति, परंतु स्वप्रतिज्ञां न त्यजंतीत्यर्थः । वसंततिल वृत्तम् ॥ १११ ॥

( भा० टी० ) लज्जादि गुणोंके समूहको उत्पन्न करनेवाली औ अपनी माताकी नांई शुद्ध हृदय और स्वाधीन रहनेवाली प्रतिज्ञाको तेज स्वी और सत्यव्रतके धारण करनेवाले पुरुष नहीं छोड़ते, परंतु अपन प्राणभी सुखसे त्याग देते हैं! ॥ १११ ॥ इति भर्तृहरिकृत—नीतिश ककी भाषाटीका संपूर्णा ॥

॥ इति नीतिशतकं संपूर्णम् ॥

---

श्रीः ।

# भर्तृहरिविरचितं
# शृंगारशतकं प्रारभ्यते ।

शम्भुस्वयंभुहरयो हरिणेक्षणानां
येनाक्रियन्त सततं गृहकर्मदासाः ।
वाचामगोचरचरित्रविचित्रिताय
तस्मै नमो भगवते कुसुमायुधाय ॥ १ ॥

( सं० टी० ) इदानीं शृंगारशतकं व्याख्यायते । सम्यग्विचारितं चेत् परिणामे वैराग्यमेवास्ति । निंदास्तुतिः स्तुतिनिन्दा वा द्विप्रकाराऽस्ति । अत्र तावत् स्तुतिनिन्दाप्रकारः । स्त्रीणां शृंगारश्च नश्वरः। एतयोः सकाशात् सुखं तन्नश्वरं परिणामे दुःखमेव । एवं सति विषयिभिरविचार्य बहुतरं स्तूयते । सा स्तुतिरादौ तां विलिखति–शंभुरिति । शंभुः शिवः स्वयंभूः ब्रह्मा हरिर्विष्णुरेते महान्तः ईश्वरा येन मदनेन हरिणस्य ईक्षणे नेत्रे इव ईक्षणे यासां तासां स्त्रीणां सततं निरन्तरं गृहकर्मणि दासाः कृतास्तस्मै । वाचामगोचराणि चरित्राणि तैर्विचित्रिताय नानाप्रकाराय कुसुमायुधाय नमोऽस्तु । " उक्ता वसंततिलका तभजा जगौ गः " इति लक्षणाद्वसंततिलका वृत्तम् ॥ १ ॥

( भा० टी० ) जिसने शिव, ब्रह्मा और विष्णुको भी स्त्रियोंके गृहकार्य करनेके लिये दास बना रक्खा है, और जिसका वर्णन नहीं हो सकता, ऐसे चरित्रोंके विचित्र रूपवाले पुष्पायुध ( कामदेव ) को नमस्कार है ॥ १ ॥

स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः ॥
वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियाः ॥२॥

( सं० टी० ) तत्र प्रथमतः स्त्रियः स्मितभावादिना पुरुषमवश्यं बध्नंतीति दर्शयति–स्मितेति । तत्रादौ स्त्रियाः स्मितेनेषद्धास्येन । भावेन चित्ताभिप्रायेण ।

लज्जया मुखादिगोपनरूपक्रियया । भिया भयेन । पराङ्मुखैरर्धानि कटाक्षेण वीक्षितानि नेत्रावलोकनानि तैः । वचोभिः । परोत्कर्षासहिष्णुतेर्ष्या तयेर्ष्यया कलहेन । लीलयेति । समस्तभावैः समस्तचेष्टाभिः । 'भावः सत्ता स्वभावाभिप्राय-चेष्टात्मजन्मसु' इत्यमरः । खलु निश्चयेन स्त्रियः पुरुषस्य बन्धनं भवन्ति । 'जतौ तु वंशस्थमुदीरितं जरौ'' इति लक्षणाद्वंशस्थं वृत्तम् ॥ २ ॥

( भा० टी० ) मंद मुसुकाना, लज्जित होना, मुख फेर लेना, अर्ध-कटाक्षकरके देखना, मधुर वचनसे बोलना, ईर्षासे कलह करना और अनेक चरित्र दिखाना, इन सब प्रकारोंसे स्त्री बंधनरूपही है ॥ २ ॥

भ्रूचातुर्याकुञ्चिताक्षाः कटाक्षाः स्निग्धा वाचो लज्जिताश्चैव हासाः ।
लीलामन्दं प्रस्थितं च स्थितं च स्त्रीणामेतद्भूषणं चायुधं च ॥ ३ ॥

( सं० टी० ) भ्रूचातुर्यादयो भावाः स्त्रीणां स्वभावसिद्धाः । ताः पुरुषवेधकाः भवंतीति वदति-भ्रूचातुर्येति । भ्रुवोर्यच्चातुर्यं तेनाकुंचितान्यक्षीणि नेत्राणि येषु । एवंभूताः कटाक्षा अपांगदर्शनानि । स्निग्धाः स्नेहयुक्ता वाचः । लज्जिता लज्जा-युक्ता हासाः हास्यानि । लीलया स्वभावेन मंदं शनैः प्रस्थितं प्रयाणं स्थितं च । स्त्रीणामेतदेतादृशकरणं भूषणमलंकरणमायुधं शस्त्रं च भवति । "शालिन्युक्ता म्तौ गतौ गोऽब्धिलोकैः" इति लक्षणाच्छालिनीवृत्तम् ॥ ३ ॥

( भा० टी० ) भौंह फेरनेकी चातुर्यतासे आकुंचित हैं नेत्र जिनके ऐसे अर्थात् अर्धनेत्रसे कटाक्ष चलाना, मीठी बातें बोलना, लज्जित हो हँसना, लीला करते २ मंद मंद चलना और घूमके खड़ी हो जाना, इस प्रकार आचरण करना यह स्त्रियोंके अलंकार और शस्त्रभी होता है; अर्थात् इन्हीं भावोंसे स्त्रियां शोभा पाती हैं और पुरुषोंको मारती हैं ! ॥ ३ ॥

क्वचित्सुभ्रूभङ्गैः क्वचिदपि च लज्जापरिणतैः
क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः ॥
नवोढानामेभिर्वदनकमलैर्नेत्रचलितैः
स्फुरन्नीलाब्जानां प्रकरपरिपूर्णा इव दृशः ॥ ४ ॥

( सं० टी० ) भ्रूभंगलज्जाहावभावादिना स्त्रियः पुरुषं मोहयंतीत्याह-क्वचि-दिति । प्रथमसंगतानां नवोढानां वदनान्येव कमलानि तैः नेत्रचलितैः नेत्राणि

चलितानि चञ्चलानि येषु तैः । स्फुरन्नीलाब्जानां प्रकरः समुदायस्तेन परिपूर्णा इव दृष्टयो भवन्ति । वदनानि कमलानीव तेषु नेत्रचलितानि त एव भ्रमरास्तैः पूर्णानि दृश्यन्ते । कथंभूतैर्वदनैः । क्वचित्सुभ्रूभंगैर्भ्रूभंगाश्चलनानि येषु तैः । अपि च क्वचिल्लज्जया परिणतैः नम्रीभूतैः ? क्वचिच्च भीत्या भयेन त्रस्तैः । क्वचिच्च लीलया विलसितैः शोभितैर्वदनैः । "रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति लक्षणाद्वृत्तं शिखरिणी ॥ ४ ॥

( भा० टी० ) किसी समय सुंदर भौंहसे कटाक्ष करती, कभी लज्जासे नमीहुई दिखाई पड़ती, कभी भयसे भीत होती और कभी लीलाहीसे विलासोंको धारण करती हैं. इसभांति नेत्रोंसे शोभित नवीन स्त्रियोंका जो मुखकमल है, उससे दृष्टियें ऐसी व्याप्त हो रही हैं, जैसे नीलकमलके समूह सर्वत्र छितराये हों ॥ ४ ॥

वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानां चयः ।
वक्षोजाविभकुम्भसंभ्रमहरौ गुर्वी नितंबस्थली
वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मंडनम् ॥ ५ ॥

( सं० टी० ) सौंदर्ययुक्तानां स्त्रीणां स्वभावसिद्धलक्षणमाह-वक्त्रमिति । वक्त्रं मुखं चन्द्रविकासि चन्द्रवद्वर्तुलं शोभायमानं च । पंकजानां कमलानां परीहासः विकसनं तत्क्षमे समर्थे लोचने नेत्रे । वर्णः कान्तिः स्वर्णं सुवर्णमपाकरिष्णुः सुवर्णतोऽधिकः । कचानां केशानां चयः समुदायोऽलिनीं भ्रमरीं जिष्णुः जयशीलः । वक्षोजौ स्तनौ इभस्य गजस्य कुम्भो गंडस्थलं तस्य संभ्रमः शोभा तस्य हरौ कठिनौ । गुर्वी पृथुला नितम्बस्थली पश्चात्कटिप्रदेशः । मार्दवं वाचां वचनानां हारि अत्यन्तकोमलानि वचनानि । एतत्सर्वं युवतिषु स्वाभाविकं स्वभावेनैव मण्डनं भवति । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५ ॥

( भा० टी० ) चंद्रमाके तुल्य प्रकाशमान मुख, कमलको हँसनेवाले नेत्र, स्वर्णकी दमकको मंद करनेवाली देहकी कांति, भौंरोंके पुंजको जीतनेवाले केश, गजमस्तककी शोभा हरनेवाले कठिन स्तन और विशाल नितंब और मन हरनेवाली कोमल वाणी ये सब स्त्रियोंमें स्वाभाविक भूषण हैं ॥ ५ ॥

स्मितं किंचिद्वक्रे सरलतरलो दृष्टिविभवः
परिस्पंदो वाचामभिनवविलासोक्तिसरसः ।
गतीनामारम्भः किसलयितलीलापरिकरः
स्पृशंत्यास्तारुण्यं किमिह न हि रम्यं मृगदृशः ? ॥ ६ ॥

( सं० टी० ) यौवनोत्पत्तिसमये स्त्रीणां ये दृष्टिविभवादिभावाः ते त्वतिरमणीया भवन्तीत्याह–स्मितमिति । तारुण्यं स्पृशन्त्या मृगदृशः किमपि किंचिदपि इह रम्यं नहि ? । अपितु सर्वं रम्यमेवास्ति । तत्किं वक्रे मुखे किंचित्स्मितमल्पं हास्यम् । सरलो तरलश्चंचलो दृशोर्विभवः सामर्थ्यम् । विलासेन दर्शनशक्तिः । अभिनवा विलासोक्तिस्तया सरसः मधुरः वाचां वचनानां परिस्पन्दो रचना 'रचना स्यात्परिस्पन्दः' इत्यमरः । गतीनां गमनानामारम्भः किसलयितलीलापरिकरः किसलया नवपल्लवा अत्यन्तमृदवस्तद्वन्मृदु शनैर्मृदुगमनमित्यर्थः । वृत्तं शिखरिणी । लक्षणं पूर्वोक्तम् ॥ ६ ॥

( भा० टी० ) मंद मुसुकुराता हुआ मुख, सीधे और चंचल दृष्टिपात, नये नये विलासयुक्त उक्तिसे सरस बात करना, मंद मंद गतिसे गमन आरंभ करना और अनमनी रीतिसे लीलाके समूह फैलना, ऐसे युवा-अवस्था चढ़तेही क्या क्या सुंदर हावभाव स्त्रियोंमें नहीं उत्पन्न होते ? ॥ ६ ॥

द्रष्टव्येषु किमुत्तमं ? मृगदृशां प्रेमप्रसन्नं मुखम्,
घ्रातव्येष्वपि किं ? तदास्यपवनः, श्राव्येषु किं ? तद्वचः ।
किं स्वाद्येषु ? तदोष्ठपल्लवरसः स्पृश्येषु, किं ? तत्तनुः,
ध्येयं किं ? नवयौवनं, सहृदयैः सर्वत्र तद्विभ्रमः ॥ ७ ॥

( सं० टी० ) द्रष्टव्यादिषु रूपादिविषयेषु किंकिमुत्तममिति प्रश्नोत्तरप्रकारेणाह–द्रष्टव्येति । सहृदयैरासक्तचित्तैः द्रष्टव्येषु दर्शनीयवस्तुषु किमुत्तमं द्रष्टव्यम् ? मृगदृशां मृगलोचनानां स्त्रीणां प्रेम्णा प्रीत्या प्रसन्नं मुखम् । घ्रातव्येषु घ्राणयोग्येषु किमुत्तमम् ? तदास्यपवनो मुखवायुः । श्राव्येषु श्रवणयोग्येषु किमुत्तमम् ? तद्वचो वचनम् । स्वाद्येषु स्वादनेषु किम् ? तस्या ओष्ठपल्लवस्य रसः । स्पृश्येषु स्पर्शयोग्येषु किम् ? तस्यास्तनुः शरीरम् । ध्येयं किम्? तस्या नवयौवनं तारुण्यम् । सर्वत्र सर्वदा विभ्रमो विलासः स्मरणीयः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७ ॥

( भा० टी० ) रसिकोंके देखनेयोग्य वस्तुओंमें उत्तम वस्तु क्या है ? मृगनयनी नायिकाओंका प्रेमसे प्रसन्न हुआ वदन (मुख), सूंघनेकी वस्तुओंमें सूँघनेयोग्य क्या है ? उनके मुखकी भाफ, सुननेमें मधुरवाणी, स्वादिष्ट वस्तुओंमें उनके अधरपल्लवका रस, स्पर्शकी वस्तुओंमें उनका शरीर और ध्यान करनेके योग्य क्या है ? उनका यौवन और विलास ॥ ७ ॥

एताः स्खलद्वलयसंहतिमेखलोत्थ-
झङ्कारनूपुररवाहृतराजहंस्यः ।
कुर्वन्ति कस्य न मनो विवशं तरुण्यो ?
वित्रस्तमुग्धहरिणिसदृशैः कटाक्षैः ॥ ८ ॥

( सं० टी० ) तरुण्यः कस्य मनः स्वाधीनं न कुर्वंति ? अपितु सर्वस्य कुर्वंतीत्याह–एता इति । एतास्तरुण्यः कटाक्षैः कस्य पुरुषस्य मनो विवशं स्वाधीनं न कुर्वन्ति ? अपितु सर्वस्य कुर्वन्त्येव । कथंभूताः ? स्खलंति शब्दायमानानि वलयानि तेषां संहतिः मेखलाश्च ताभ्य उत्थितो झङ्कारो झणत्कारस्तेन सहैतादृशानि नूपुराणि तेषां रवाच्छब्दादाहृता जिता राजहंसानां स्त्रियो याभिस्ताः । कथंभूतैः कटाक्षैः ? वित्रस्ता भयभीता मुग्धा हरिण्यस्तासां यथा प्रेक्षणानि तत्सदृशैः कटाक्षैः । सर्वथा पुरुषं स्त्रियो विवशं कुर्वंतीति भावः । वसंततिलकावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८ ॥

( भा० टी० ) जिन्होंने चंचल कंकणोंके शब्द, क्षुद्रघंटिकाकी ध्वनि और नूपुरके झणत्कारसे राजहंसिनियोंकी चाल जीत लिया है वे तरुणी, भड़की हरणीके समान नेत्रपात कर किसके मनको विवश नहीं करतीं ? ॥ ८ ॥

कुंकुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ? ॥ ९ ॥

( सं० टी० ) अस्यां भुवि रामा स्त्री पुरुषं सर्वथा वशीकुरुते इत्याह–कुंकुमेति । कुंकुमस्य पङ्कः कर्दमस्तेन कलङ्कितो देहो यस्याः सा । गौरौ पयोधरौ स्तनौ ताभ्यां कंपितो हारो यस्याः सा । नूपुराण्येव हंसास्तै रणंति शब्दा-

यमानानि पदान्येव पद्मानि यस्याः सा। एवंभूता रामा स्त्री भुवि कं पुरुषं न वशीकुरुते ? अपितु सर्वानपि। "दोधकमिच्छति भत्रितयाद्गौ" इति क्षणलादोधकवृत्तम् ॥ ९ ॥

( भा० टी० ) केशर और चंदनसे जिसका देह शोभित है, गोरे, गोरे स्तनोंपर हार झूमता है और चरणकमलोंमें हंससे नूपुर बोलते हैं; ऐसी सुंदर स्त्री इस पृथ्वीपर किस पुरुषका मन नहीं मोह लेती ? ॥ ९ ॥

नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीनाम्।
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ? ॥ १० ॥

( सं० टी० ) स्वदृष्टिपातैरिंद्रादीनामपि वशकर्तृत्वसामर्थ्यवतीनां स्त्रीणां कविवरैः क्रियमाणोऽबलात्वव्यवहारो मुधेति कथयंस्तासां बलवत्वं दर्शयति-नूनमिति। ते कविवराः पण्डितश्रेष्ठाः नूनं निश्चयेन विपरीतबोधाः विपरीतज्ञातारः। ये कामिनीनामबला इति नित्यमाहुः वदन्ति । याभिः कामिनीभिरतिशयेन विलोलतरास्तारका येषामेवंभूतैर्दृष्टिपातैः प्रेक्षणैः शक्रादयोऽपि विजिताः। तु इति निश्चयेन। ता अबलाः कथं प्रोक्ताः ? वसंततिलकावृत्तम् ॥ १० ॥

( भा० टी० ) वे श्रेष्ठ कवि निश्चितही उलटी समझवाले हैं, जिन्होंने स्त्रियोंका नाम अबला रक्खा है; क्योंकि जिनकी चंचल पूतलियोंके कटाक्षसे इंद्रादिकभी हार मानते हैं, भला कहो वे 'अबला' कैसे हैं ? ॥१०॥

नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः।
यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ ११ ॥

( सं० टी० ) अयं मकरध्वजस्तासां नेत्रसंचारैस्तदाकार एव भवतीत्याह-नूनमिति । सुष्ठु भ्रुवौ भ्रुकुटी यस्यास्तस्याः स्त्रियो मकरध्वजः कामः नूनं निश्चितमाज्ञाकार आज्ञापालकोऽस्ति । यतो यस्माद्धेतोस्तस्याःस्त्रियो नेत्रसंचारेण नेत्रचालनेन सूचितेषु पुरुषेषु प्रवर्तते प्रवृत्तो भवति। अनुष्टुप् वृत्तम् ॥ ११ ॥

( भा० टी० ) कामदेव निश्चयकरके सुन्दर भौंहवाली स्त्रीका आज्ञाकारी सेवक है; क्योंकि जिसे वह आंखोंसे सैन कर देती है, उसी पुरुषको वह काम दबा लेता है ॥ ११ ॥

केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने
अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः।
मुक्तानां सतताधिवासरुचिरं वक्षोजकुम्भद्वय-
मित्थं तन्वि ! वपुः प्रशांतमपि ते क्षोभं करोत्येव नः ॥१२॥

( सं० टी० ) केशा इति । केशाः कचाः संयमिनः आवृता बद्धाः पक्षे संयमिनो योगिस्वरूपाः संतीति शेषः । तथा लोचने श्रुतेः कर्णस्यापि परं पारं प्रांतं गते स्तः। आकर्णविशाले इत्यर्थः । वा श्रुतेर्वेदस्य पारं गते सांगवेदाध्यायिनी इति ध्वनितमित्यर्थः । तथा स्वभावेनैव शुचिभिः शुद्धैर्द्विजानां दंतानां अथवा ब्राह्मणानां गणैरपि अन्तर्वक्त्रं कीर्णं व्याप्तं 'दंतविप्रांडजा द्विजाः ' इत्यमरः। तथैव मुक्ताफलानां सततमधिवासो वसतिस्तया रुचिरं शोभायमानम् । पक्षांतरे मुक्तानां जीवन्मुक्तानामधिवासस्तेन शोभायमानमित्यर्थः । वक्षोजौ स्तनौ तावेव कुंभौ तयोर्द्वयम् । हे तन्वि ! इत्थमुक्तप्रकारेण ते तव वपुः शरीरं प्रशांतमपि नोऽस्माकं क्षोभं करोत्येव । शार्दूलविक्रीडितं वृत्तम् । ल० पू० ॥ १२ ॥

( भा० टी० ) केश संयमी हैं, अर्थात् सुगंधित तैलयुक्त कंघीसे सँवारे हैं; नेत्र ( श्रुतिके ) कानोंके पार हो गए हैं, अर्थात् कानोंतक अत्यन्त विशाल हैं, मुख अन्तरसे सहजही शुचि अर्थात् विमल ऐसे द्विजोंके समूहसे भरे अर्थात् दांतोंकी पंक्तिकी किरणोंसे चमकता है और दोनों स्तनकलश ये निरंतर मुक्ताका वास अर्थात् मोतियोंके मालासे शोभित हैं, हे स्त्रि! सूक्ष्मांगि! तेरा शरीर शांतस्वरूपही है अर्थात् संयमी ( नियमी ) श्रुति ( वेदके पारंगत ) शुचि ( पवित्र ) द्विज ( ब्राह्मण ) मुक्त ( विरक्त पुरुष ) है; पर मुझे तो अनुराग ही उत्पन्न करता है ॥ १२ ॥

मुग्धे ! धानुष्कता केयमपूर्वा त्वयि दृश्यते ?।
यथा हरसि चेतांसि गुणैरेव न सायकैः ॥ १३ ॥

( सं० टी० ) सुंदरस्त्रीणां धानुष्कता लोकविलक्षणा इति दर्शयति–मुग्धेति । हे मुग्धे सुंदरि! त्वयि केयमपूर्वा प्रसिद्धधानुष्कता धनुष्यत्वं दृश्यते? यथा पुरुषाणां चेतांसि गुणैर्धनुर्ज्याभिः हरसि, सायकैर्बाणैर्न । प्रसिद्धः धन्वी दृश्यः मानं लक्ष्यं बाणैः हरति । त्वं त्वदृश्यमपि पुरुषचेतोरूपं लक्ष्यं गुणैरेव हरसि । नतु बाणैरिति विलक्षणा तव धनुष्मत्तेति भावः । अनुष्टुप् वृत्तम् ॥ १३ ॥

( भा० टी० ) हे सुंदरी! तेरी यह कमनैती विचित्र देख पडती है, जो चित्तको गुण अर्थात् प्रत्यंचा वा चतुराईहीसे बेधती है, बाणसे नहीं! ॥ १३ ॥

सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु ।
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ १४ ॥

( सं० टी० ) स्त्रीष्वासक्तः पुरुषः कमपि लोकव्यवहारं न पश्यतीत्याह–सतीति । प्रदीपे सति अग्नौ सति, तारा नक्षत्राणि रविः सूर्यः इंदुश्चंद्रश्च तेषु तमोनाशकेषु सत्सु अपि, मृगस्य हरिणस्य शावो बालकस्तस्याक्षिणी नेत्रे यस्यास्तया स्त्रिया विना इदं सर्वं जगत् मे तमोभूतं तमःस्वरूपं भाति । स्त्रीकटाक्षेण ताडितोऽहं भूमौ कार्यमकार्यं किमपि न पश्यामीति भावः । वृत्तमनुष्टुप् ॥ १४ ॥

( भा० टी० ) दीपक, अग्नि, तारे, सूर्य और चंद्रमा ये सब विद्यमान हैं; परन्तु एक मृगनैनी मेरी स्त्री बिना मुझे सब जग अँधेरा है ! ॥ १४ ॥

यद्वृत्तः[1] स्तनभार एष तरले नेत्रे चले भ्रूलते
रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ।
सौभाग्याक्षरपंक्तिरेव[2] लिखिता पुष्पायुधेन स्वयं
मध्यस्थाऽपि करोति तापमधिकं रोमावली केन सा ? ॥ १५ ॥

( सं० टी० ) कुचभारादयः पीडां कुर्वंत्यथापि तदपेक्षया अधिकां पीडां मध्यस्थापि रोमावली करोतीत्याह–यदिति । हे कामिनि! यद्यस्मात् कारणात् तव एष वर्तुलः स्तनभारः कुचभारः, तरले चंचले नेत्रे, चले चंचले शुभे भ्रूलते, इदमोष्ठपल्लवम्, एतानि सर्वाणि अस्मासु नाम इति निश्चयेन । राग इच्छा

१ उद्वृत्तः । २ पंक्तिकेव.

तयाऽन्येषु व्यथां कुर्वन्ति तत्कुर्वन्तु । कुतः ? पुष्पायुधेन मदनेन स्वयं तव भाले सौभाग्याक्षरपंक्तिरेव लिखिता वर्तते । अतोऽस्माकं किमपि न चलति । परंतु इयं तवोदरे रोमावली मध्यस्थापि तापं करोति । तत्केन कारणेन तन्न ज्ञायते, तस्मात्सा अधिकतापदात्री भवतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । ल० पू० ॥१५॥

( भा० टी० ) उन्नत स्तनके भार, चंचल नेत्र, चंचल भ्रूलता और रागभरे नवीन पत्तोंसे दोनों अधरपल्लव ये रसिकोंके शरीरमें पीडा करें तो करें; परंतु कामदेवके हाथकी लिखी सौभाग्यके अक्षरोंकी पंक्तिसी मध्यस्थ रोमावली क्यों अधिक ताप देती है ? तात्पर्य यह कि, उन्नत चंचल रागवान् प्रायः पीड़ा देताही है; परन्तु मध्यम ( जिसका काम छुड़ा देनेका है वह ) रोमावली क्यों अधिक पीड़ा देती है अर्थात् विपरीत करती है ॥ १५ ॥

गुरुणा स्तनभारेण मुखचंद्रेण भास्वता ।
शनैश्वराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ १६ ॥

( सं० टीका ) कविरधुना मोहिकां स्त्रियं सबहुमानेन वर्णयति-गुरुणेति । सा स्त्री गुरुणा महता स्तनभारेण कुचभारेण । ( अथवा गुरुणा बृहस्पतिना ) । भास्वता देदीप्यमानेन मुखमेव चंद्रस्तेन ( पक्षे भास्वता सूर्येण वा चंद्रेण च ) शनैर्मंदं चरतस्ताभ्यां पादाभ्यां चरणाभ्यां ( वा शनैश्चरेण ) । ग्रहमयीव सूर्यादिग्रहप्रचुरेव रेजे शोभितवती । वृत्तमनुष्टुप् ॥ १६ ॥

( भा० टी० ) वह स्त्री गुरु ( बृहत् ) स्तनोंसे, भास्वान् ( प्रकाशमान ) मुखचंद्रसे और मंदगामी दोनों चरणोंसे ग्रहमयसी शोभा देती है. अर्थात् गुरु ( बृहस्पति ), भास्वान् ( सूर्य ), मंदगामी ( शनि ) व चंद्र, प्रसिद्ध ही हैं; इन ग्रहोंसरीखी प्रकाशित होती है ॥ १६ ॥

यस्याः स्तनौ यदि घनौ जघनं विहारि
वक्त्रं च चारु तव चित्त ! किमाकुलत्वम् ? ।
पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा
पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥ १७ ॥

( सं॰ टी॰ ) पुण्यैर्विना मनोरमवनितालाभो दुर्लभोऽतः पुण्यप्राप्तिविषये यत्नः कार्य इति चित्तप्रार्थनां करोतीत्याह—यस्या इति । हे चित्त! यदि यस्याः स्तनौ कुचौ घनौ कठिनौ । तथा च जघनं कटिपुरोभागः विहारि विशेषेण मनोहारि क्रीडायोग्यम् । तथा च वक्त्रं मुखं चारु सुन्दरमस्ति । तर्हि तव व्याकुलत्वं किमर्थम् ? । यदि तस्याः तेषु स्तनादिषु तव, वाञ्छास्ति तर्हि त्वं पुण्यं कुरुष्व । समीहितार्थाः अभीप्सितार्थाः वाञ्छितार्थाः पुण्यैर्विना न भवन्ति न सिद्ध्यन्तीत्यर्थः । वसंततिलकावृत्तम् । लक्षणं पूर्वोक्तम् ॥ १७ ॥

( भा॰ टी॰ ) जिस स्त्रीके स्तन पुष्ट हैं और जघन विहार करने योग्य है और मुख सुंदर है तो उसे देखकर हे चित्त! क्यों व्याकुल होता है ? यदि उनमें ( स्तनादिकोंमें ) तेरी वांछा हो तो पुण्य कर; क्योंकि पुण्य-विना मनोरथ सिद्ध नहीं होते ॥ १७ ॥

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः ! समर्यादमिदं वदन्तु ।
सेव्या नितम्बाःकिलभूधराणामुत स्मरस्मेरविलासिनीनाम्॥१८॥

( सं॰ टी॰ ) उभयोर्भूधरस्त्रीनितंबयोः सुखहेतुत्वात् तयोर्मध्ये आत्यंतिकसुखहेतुत्वं कस्येत्याशयेन पृच्छति—मात्सर्येति । भो आर्याः योग्यायोग्यविचार-निपुणाः ! यूयं मात्सर्यं परोत्कर्षासहनमुत्सार्य त्यक्त्वा कार्यमवश्यं कर्तव्यं विचार्य च इदं वक्ष्यमाणं समर्यादं शास्त्रीयमर्यादानुल्लंघनपूर्वकं कार्यं वदन्तु किल । तत् किम्? यदि परमार्थं चेत्तर्हि लोकैः भूधराणां नितम्बाः सेव्याः । उत अथवा स्मरस्य मदनस्य स्मेरो भरस्तेन विलासिनीनां नितम्बाः सेव्या इति । उपजातिर्वृत्तम् ॥ १८ ॥

( भा॰ टी॰ ) हे पंडितो ! मत्सरता त्यागके और कर्तव्य कार्यको विचार-कर मर्यादसहित यह कहो कि, पर्वतहीके नितंब सेवनेयोग्य हैं अथवा काम-देवकी उमंगसे मुसुक्याती विलासिनी स्त्रियोंके नितंबही सेवनेयोग्य हैं ? नितंब पर्वतके मध्यभाग और स्त्रियोंके कटिके पश्चात् भागको कहते हैं १८

संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां
तत्त्वज्ञानामृताम्भःप्लुतललितधियां यातु कालः कदाचित् ॥
नो चेन्मुग्धाङ्गनानां स्तनजघनभराभोगसंभोगिनीनां
स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यतानाम्॥१९॥

( सं० टी० ) इहास्मिन्नसारे संसारे पंडितानां द्विधा कालयापनं भवतीति दर्शयति-संसारे इति । अस्मिन्नसारे सारांशरहिते परिणतितरले परिणामचञ्चले च संसारे पण्डितानां द्वे गती स्तः । 'गतिः स्त्रीमार्गदर्शयोः' इति मेदिनी । अतस्तत्त्वज्ञानेनैवामृतोदकेन प्लुता स्नाता अतएव ललिता तीक्ष्णा धीर्येषामेवंभूतः कालः कदाचिद्यातु गच्छतु, इति एका गतिः । नो चेत्तर्हि स्तनजघनयोर्भरस्तस्मिन् आभोगः पूर्णः संभोगो यासां तासां मुग्धाङ्गनानां स्थूलोपस्थस्थलीषु भूमिषु स्थगितः करतलस्पर्शस्तस्मिन् लोलानां सतृष्णानामुद्यतानाम् । तासां संगेन कालो यातु, इयं गतिर्द्वितीया । अस्मिन्नसारे संसारे सदा नितम्बिनीसेवनं तत्वज्ञानवत्सुखसाधनमिति तु तात्पर्यम् । वृत्तं स्रग्धरा । लक्षणं पूर्वोक्तम् ॥ १९ ॥

( भा० टी० ) यह असार संसार कि जिसकी अंत अवस्थाअति चंचल है; उसमें पंडितोंके हेतु दोही सुलभ गति हैं. कि या तो तत्त्वज्ञानरूपी अमृतरसमें स्नान करनेवाली निर्मल बुद्धिहीसे उनका काल अच्छा व्यतीत होता है अथवा सुंदर कामिनी जो कि पुष्ट स्तन और जघनसे भोगमें सुखदायी हैं, उनके शरीरपर हाथ दिये चंचलतासे उद्योगमें तत्पर हैं, उनका काल भली भांति व्यतीत होता है ॥ १९ ॥

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ।
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ २० ॥

( सं० टी० ) मोहिकां स्त्रियं वर्णयति-मुखेनेति । सा प्रसिद्धा स्त्री चंद्रवत्कांतं सुंदरं मुखं तेन ( पक्षे चंद्रकांतमणिना ) तथा महांतश्च ते नीलास्तैः कृष्णवर्णैः शिरोरुहैः केशैः ( पक्षे नीलमणिभिः ) तथा च पद्मं रक्तकमलं तद्वद्रागो रक्तिमा ययोस्ताभ्यां पाणिभ्यां हस्ताभ्यां ( पक्षे पद्मरागमणिभ्यां ) रत्नमयीव रत्नप्रचुरेव रेजे शुशुभे । अनुष्टुप् वृत्तम् ॥ २० ॥

( भा० टी० ) चंद्रकांतमुख, महानील केश, और पद्मराग रूप दोनों हाथोंसे वह स्त्री ऐसी रत्नमय शोभा देती है. [ अर्थात् चंद्रकांत, महानील व पद्मराग तीन प्रकारकी मणियांभी होती हैं ] ॥ २० ॥

संमोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।

एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ?॥ २१ ॥

( सं० टी० ) वामलोचनाः स्त्रियः पुरुषं मोहयंतीति दर्शयति—संमोहयंतीति । एताः प्रसिद्धाः वामनयनाः वामलोचनाः नराणां पुरुषाणां सदयं दयायुक्तं हृदयमंतःकरणं प्रविश्य प्रवेशं कृत्वा संमोहयंति, मदयंति, उत विडंबयंति, च निर्भर्त्सयंति, परं च रमयंति, विषादयंति खेदमुत्पादयंति । तस्मात्स्त्रियः किं नाम न समाचरंति ? अपितु सर्वमेव आचरंतीत्यर्थः । वसंततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ २१ ॥

( भा० टी० ) जो मोह लेतीं, मत कर देतीं, विडंबना करातीं, डांट देतीं, रमण करातीं और विरहका विषाद देती हैं; वे स्त्रियां मनुष्यके सदय हृदयमें बैठके क्या नहीं करती हैं ? ॥ २१ ॥

विश्रम्य विश्रम्य वनद्रुमाणां छायासु तन्वी विचचार काचित् ।
स्तनोत्तरीयेण करोद्धृतेन निवारयन्ती शशिनो मयूखान् ॥ २२ ॥

( सं० टी० ) अथ भोगादिलक्षणमुच्यते—विश्रम्येति । काचित्तन्वी कृशांगी विरहिणी स्त्री वनद्रुमाणां आरण्यकवृक्षाणां छायासु विश्रम्य विश्रम्य विश्रांतिं कृत्वा । आदरार्थे वीप्सा । स्तनोत्तरीयेण स्तनोपरितनवस्त्रेण करोद्धृतेन शशिनः चन्द्रस्य मयूखान्किरणान्निवारयन्ती वने अरण्ये विचचार । संचारं कृतवतीत्यर्थः । उपजातिर्वृत्तम् । लक्षणं पूर्वोक्तम् ॥ २२ ॥

( भा० टी० ) वनके वृक्षोंकी छायामें विश्राम लेती कोई एक स्त्री अपनी साड़ीका अंचल हाथसे उठाये चंद्रमाकी किरणोंको रोकती हुई जाती है. यहां कृष्णाभिसारिका नायिका जानो ॥ २२ ॥

अदर्शने दर्शनमात्रकामा दृष्ट्वा परिष्वङ्गरसैकलोलाः ।
आलिङ्गितायां पुनरायताक्ष्यामाशास्महे विग्रहयोरभेदनम् ॥२३॥

( सं० टी० ) अभिलषितविषयप्राप्तावपि विषयेच्छायास्तृप्तिर्न भवतीत्याह—अदर्शन इति । आयताक्ष्याः प्रिययुवत्या अदर्शने दृष्टिगोचरत्वाभावे दर्शनमेव दर्शनमात्रं तस्मिन् कामो लालसा येषां तथाभूताः वयं स्म इति शेषः । अस्ति भवति परोऽप्रयुज्यमानोऽप्यस्तीति भाष्यात् । तां दृष्ट्वा परि-

ष्वङ्गरसे आलिंगनरसे एकस्मिन्नेव लोलाः सतृष्णाः आयताक्ष्यां दीर्घलोचनायां पुना रतिसमये आलिङ्गितायां सत्यां उभयोर्विग्रहयोर्देहयोरभेदं सातत्येनैकत्र स्थितिमाशास्महे इच्छामः । अभिलषितविषयप्राप्तावपि विषयेच्छा न निवर्तत एवेति भावः । वृत्तमुपजातिः । लक्षणं पूर्वोक्तम् ॥ २३ ॥

( भा० टी० ) जबतक हम स्त्रीको नहीं देखते, तबतक तो देखनेहीकी इच्छा रहती है; देखते हैं तब उससे आलिंगनरसका सुख चाहते हैं और लिपटनेपर यह अभिलाषा रखते हैं कि, यह मृगनैनी हमारे शरीरसे बिलग न हो ! ॥ २३ ॥

मालती शिरशि जृम्भणोन्मुखी चन्दनं वपुषि कुंकुमान्वितम् ।
वक्षसि प्रियतमा मनोहरा स्वर्ग एष परिशिष्ट आगतः ॥ २४ ॥

( सं० टी० ) स्रक्चंदनादिधारणपूर्वकः मनोहरः प्रियासङ्गमः स्वर्गे अतिसुखद इत्याह—मालतीति । यस्य मालतीपुष्पमाला शिरसि वर्तते । कीदृशी ? जृम्भणोन्मुखी विकसन्मुखी विकसिता तथा वपुषि शरीरे चन्दनं कुंकुमेन अन्वितं युक्तम् । तथा च वक्षसि हृदये प्रियतमा मनोहरा वर्तते तस्य स्वर्गे अवशिष्टः उर्वरितः एषोऽत्र भूमौ आगतः । अत्रापि स्वर्गभोगो भवतीति भावः । रथोद्धता वृत्तम् । तदुक्तं वृत्तरत्नाकरे "रो नराविह रथोद्धता लगौ" इति लक्षणात् ॥ २४ ॥

( भा० टी० ) शीघ्र खिलनेवाली मालतीकी कलियोंकी माला मस्तकमें पहिने हों, केसरयुक्त चन्दन अंगमें लगाए हों और सुन्दर प्यारी स्त्रियोंको छातीसे लिपटाए हों तो यह जानो कि, शेष स्वर्गका भोग यहां प्राप्त हुआ है ॥ २४ ॥

प्राङ्मामेति मनागमानितगुणं जाताभिलाषं ततः
सव्रीडं तदनु श्लथोद्यतमनु प्रत्यस्तधैर्यं पुनः ।
प्रेमार्द्रस्पृहणीयनिर्भररहःक्रीडाप्रगल्भा ततो
निःशङ्काङ्गविकर्षणाधिकसुखं रम्यं कुलस्त्रीरतम् ॥ २५ ॥

( सं० टी० ) संभोगे कुलस्त्रीरतं अतीव रमणीयमित्याह—प्राङ्मामेतीति । कुलस्त्रीरतं रम्यं कथम् ? प्राक् पूर्वं मां प्रति एति । मनागेकवारम् । अमानितगुणं

स्वयमेव आगमिष्यति । इति कारणात् आदरो नैव कृतः । ततः जाताभिलाषं इच्छा जाता, ततः सव्रीडं लज्जया सह आगता । तदनु श्लथोद्यतं शिथिलतया उद्यता । अत्र वृताः अनु पश्चात्प्रत्यस्तधैर्यं त्यक्तधैर्यं पुनः प्रेम्णा आर्द्रः स्पृहणीयः निर्भर आदरः तेन रहः एकान्ते क्रीडायां प्रगल्भा त्यक्तलज्जा ततः निःशंकमंगस्य विकर्षणमाकर्षणं तेन अधिकं सुखम् । एवं शनैः शनैः त्यक्तलज्जमिति कारणात् रम्यं मनोहरमस्ति, नान्यस्त्रीरतमिति भावः । शार्दूलविक्रीडितं वृत्तम् । ल० पू० ॥ २५ ॥

( भा० टी० ) पहिले तो नहीं नहीं करना, यह मनोहर गुण उसमें है; फिर अभिलाषा उत्पन्न होना और लज्जासे शरीर ढील देना, धैर्य छोड़ना, प्रेमरसमें भींगना, सराहनेयोग्य एकान्त क्रीडाका चातुर्यविस्तार करना, फिर निडर हो अंग खैंचनेका अधिक सुखलाभ करना, इससे निश्चय जानो कि कुलस्त्रीहीकी रति अच्छी होती है ॥ २५ ॥

उरसि निपतितानां स्रस्तधम्मिल्लकानां
मुकुलितनयनानां किंचिदुन्मीलितानाम् ।
सुरतजनितखेदस्विन्नगण्डस्थलीना-
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ २६ ॥

( सं० टी० ) इहास्मिन्संसारेऽनुकूलां स्त्रियमुपभुञ्जानां ये पुरुषास्त एव धन्या इत्याह--उरसीति । उरसि हृदये निपतितानां पतितानामर्थाद्विपरीतसुरते इत्यर्थः । स्रस्तो विध्वस्तो धम्मिल्लः केशपाशो यासां तासाम् । मुकुलिते मीलिते नयने नेत्रे यासां तासाम् । किंचिदीषन्मीलितानामीषत्पश्यंतीनाम् । सुरते जनितो यः खेदः श्रमस्तेन स्विन्ने घर्मयुक्ते गण्डस्थले कपोलौ यासां तासामेवंविधानां वधूनां स्त्रीणामधरमधु अधरासवं ये पिबंति ते भाग्यवन्तः संति । मालिनीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ २६ ॥

( भा० टी० ) छातीपर लेटी हुई हैं, और सुगंधित केश उनके बिखरे हुए हैं, आधे नेत्र मुँदे हुए हैं, कुछ कुछ हिल रही हैं, मैथुनके श्रमसे उनके गालोंपर पसीने झलक रहे हैं, ऐसी स्त्रियोंके अधरमधुको भाग्यवान्ही पुरुष पान कर सकते हैं ! ॥ २६ ॥

आमीलितनयनानां यः सुरतरसोऽनुसंविदं कुरुते ।
मिथुनैर्मिथोवधारितमवितथमिदमेव कामनिर्बहणम् ॥ २७ ॥

( सं० टी० ) कामाख्यपुरुषार्थस्य निर्बहणमाह-आमीलितेति । आ ईषन्मीलिते नयने नेत्रे यासां स्त्रीणां यः सुरतरसः अनुसंविदं सुखं कुरुते । इदमेव अवितथं कामस्य निर्बहणं कर्तव्यम् । मिथुनैर्द्वंद्वैर्मिथः परस्परमवधारितं ज्ञातमन्यो ह्येतत् न जानाति । गीतिर्वृत्तम् । "आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कलयति शोभा तां गीतिं गीतवान्भुजङ्गेशः" इति लक्षणात् ॥ २७ ॥

( भा० टी० ) आलस्य भरे नेत्रोंवाली स्त्रियोंको कामसे तृप्ति करना यही स्त्री-पुरुष दोनोंका परस्पर कामपूजन है ! ॥ २७ ॥

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।
तदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा २८

( सं० टी० ) अवस्थाभेदेन स्त्रीपुरुषयोः स्थितौ व्युत्क्रममाह-इदमिति । पुंसां पुरुषाणां यत् यस्मात् जरास्वपि मान्मथा मदनस्य विकाराः कृताः । इदमनुचितं कृतम् । अक्रमक्रमोऽपि नैव । तदपि तथा च नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा न कृतम् । इदमपि अनुचितं कृतम् । पुष्पिताग्रावृत्तम् । "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ २८ ॥

( भा० टी० ) यह विधाताने पुरुषोंमें बड़ी अनुचित और उलटी बात उत्पन्न की है, कि बुढ़ापामेंभी कामका विकार प्रगट होता है; ऐसा ही स्त्रियोंकोभी नहीं किया कि जबलौं स्तन न गिरें तभीलौं जिएं और कामचेष्टा रक्खें ! ॥ २८ ॥

एतत्कामफलं लोके यद्द्वयोरेकचित्तता ॥
अन्यचित्तकृते कामे शवयोरिव संगमः ॥ २९ ॥

( सं० टी० ) स्त्रीपुरुषयोरेकचित्ततापूर्वकः सङ्गम एव कामफलमित्याह-एतदिति । लोके यत् द्वयोः स्त्रीपुरुषयोरेकचित्तता एकचित्तत्वमेतदेव कामस्य फलं भवति । अन्यस्मिन्पुरुषे अन्यस्य योषिति वा यच्चित्तं तेन कृते कामे सति शवयोर्मृतयोः सङ्गम इव भवतीति शेषः । अनुष्टुप् वृत्तम् ॥ २९ ॥

( भा० टी० ) स्त्री और पुरुषके समागममें एकचित्त हो जाना कामदेवका यही मुख्य फल है. यदि काममें दोनोंका चित्त और ठौर रहा तौ मृतकोंकासा संगम होता है ॥ २९ ॥

प्रणयमधुराः प्रेमोद्गाढा रसादलसास्तथा
भणिति मधुरा मुग्धप्रायाः प्रकाशितसंमदाः ।
प्रकृतिसुभगा विश्रम्भार्हाः स्मरोदयदायिनो
रहसि किमपि स्वैरालापा हरन्ति मृगीदृशाम् ॥ ३० ॥

( सं० टी० ) कामिनीषु स्त्रीष्वत्यंतासक्तस्य पुरुषस्य ताः सर्वस्वं हरंतीत्याह-प्रणयमधुरा इति । मृगीदृशां हरिणाक्षीणां स्त्रीणां रहसि स्वैरं यथेष्टमालापा स्वेच्छारचनानि किमपि अनिर्वचनीयं सुखं हरन्ति कुर्वन्ति । कथंभूताः आलापाः ? प्रणयेन प्रीत्या मधुराः प्रेम्णा उद्गाढाः । अतिशयरसादसाः तथा भणितौ रतिकूजिते मधुराः । मुग्धप्राया अस्फुटाः । प्रकाशिताः प्रकर्षेण मदा यैस्ते प्रकाशितसंमदाः । प्रकृत्या स्वभावेन सुभगाः सुन्दराः । विश्रंभार्हाः विश्वासयोग्याः । स्मरस्य कामस्य उदयं ददतीति ते स्मरोदयदायिनः । हरिणीवृत्तम् ॥ ३० ॥

( भा० टी० ) सुशीलतासे मीठे, प्रेमरससे पूर्ण, ढीले स्वरसे सुखदायी, सुननेमें सुंदर, अव्यक्त आनन्द प्रकाश करनेवाले, सहजही सुडौल, विश्वासभीने और कामदेवके उदय करनेवाले ऐसे एकांतमें स्त्रियोके स्वच्छन्द सुभाषण मनको हरण कर लेते हैं ॥ ३० ॥

आवासः क्रियतां गाङ्गे पापवारिणि वारिणि ।
स्तनमध्ये तरुण्या वा मुक्ताहारिणि हारिणि ॥ ३१ ॥

( सं० टी० ) इहामुत्र फलभेदेन पुरुषस्य कर्तव्यतामाह-आवास इति । पुरुषेण पापं वारयति तत्स्वभावे गङ्गाया इदं गांगं तस्मिन् वारिणि जले तत्तीरे इति सूचितम् । आवासः वसतिः क्रियतां पुण्यसंपादनार्थमिति भावः । वा अथवा हारो मुक्ताहारोऽस्ति यस्मिंस्तस्मिन्हारिणि मनोहारिणि तरुण्याः युवत्याः स्तनद्वये कुचद्वये आवासः स्थितिः क्रियताम् । ऐहिकसुखसंपादनमित्यर्थः । अनुष्टुप् वृत्तम् ॥ ३१ ॥

( भा० टी० ) गंगाके तटपर वास करना, जिसका जल पाप हरने-

वाला है अथवा युवा स्त्रीके हारवाले स्तनोंके मध्य बसना मन हर लेता है ॥ ३१ ॥

प्रियपुरतो युवतीनां तावत्पदमातनोतु हृदि मानः ।
भवति न यावच्चंदनतरुसुरभिर्मधुसुनिर्मलः पवनः ॥ ३२ ॥

( सं० टी० ) मलयानिलादिसामग्रीसमवधाने सति स्त्रीणां मनसि मानोदयो न भवतीत्याह–प्रियेति । तावत् प्रियस्य पुरतः अग्रभागे युवतीनां तरुणीनां हृदि मानः अहंकारः पदमातनोतु विस्तारयतु । यावच्चंदनतरुणा चंदनवृक्षेण सुरभिः सुगंधिः अत एव मधुः मधुरः सुनिर्मलः स्वच्छः पवनोऽनिलो न भवति । गीतिर्नाम वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३२ ॥

( भा० टी० ) गर्ववाली स्त्रियोंके हृदयमें यह प्रसिद्ध मान तभी-लौं ठरहता है, जबलौं चंदनकी सुगंध भरी मलयाचलकी वायु नहीं चलती ॥ ३२ ॥

---

## अथ ऋतुवर्णनम् । तत्रादौ वसन्तस्य ।

परिमलभृतो वाताः शाखा नवांकुरकोटयो
मधुरविरतोत्कण्ठा वाचः प्रियाः पिकपक्षिणाम् ।
विरलसुरतस्वेदोद्गारा वधूवदनेन्दवः
प्रसरति मधौ राव्यां जातो न कस्य गुणोदयः ? ॥ ३३ ॥

( सं० टी० ) वसंतसमये सर्वेषां कामवर्धकपदार्थगुणानां प्रादुर्भावो भवतीति वर्णयति । तत्रादौ वसन्तं वर्णयति—परिमलेति । परिमलभृतः परिमलयुक्ताः वाताः पवनाः वान्तीति शेषः । वृक्षाणां शाखाः शिफाः 'शाखाः शिफावरोहः स्यात्' इत्यमरः । नवांकुरकोटयः नवांकुरयुक्ताः अभवन् । पिकपक्षिणां कोकिलपक्षिणां प्रियाः मधुरविरतोत्कण्ठा वाचः उच्चैरुत्कंठितमधुरवाचः अभवन् । विरलः स्वल्प-सुरते संभोगे यः स्वेदस्तस्योद्गारः प्राकट्यं येषु । तथाभूता वधूनां वदनान्येवेन्दवश्चंद्राः अभवन् । एवं मधौ वसन्ते प्रसरति प्रकटिते सति अभवत् । तस्य मधोः राव्यां कस्य गुणोदयो मदनाविर्भावो न जातः ? वसन्तस्य मनोहरत्वं सर्वोत्कृष्टमिति भावः । हरिणीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३३ ॥

( भा० टी० ) सुगंधित पवन चल रही है, वृक्षोंकी शाखोंमें नये

पत्रोंके अंकुर निकले हैं, कोकिलादि पक्षियोंकी वाणी मधुर सुंदर उत्कंठाभरी प्यारी लगती है और स्त्रियोंके मुखचन्द्रपर रतिश्रमके बिलग बिलग पसीनेकी बूंदके कण शोभित हैं; ऐसी वसंतऋतुकी रात्रिमें किस किस वस्तुमें गुणकी ज्योति नहीं प्रकाश होती ? ॥ ३३ ॥

मधुरयं मधुरैरपि कोकिला-कलकलैर्मलयस्य च वायुभिः ।
विरहिणः प्रणिहन्ति शरीरिणो विपदि हन्त सुधापि विषायते ३४

( सं० टी० ) मधुरिति । अयं मधुर्वसन्तः शरीरिणोऽपि विरहिणः मधुरैरपि कोकिलानां पिकानां कलकलैः शब्दैः । तथा मलयस्य वायुभिः च प्रणिहंति मारयति । ननु कोकिलाकलकला मधुरा, तथा वायुरपि प्रियकरः एभिर्मरणं न घटते इत्यत आह- विपदि विपत्काले सुधा अमृतमपि विषायते विषमिवाचरति विषवद्घातयतीति भावः । हंत इति खेदे । द्रुतविलंबितं वृत्तम् । "द्रुतविलंबितमाह नभौ" इति लक्षणात् ॥ ३४ ॥

( भा० टी० ) मधुर मधुर कोकिलोंके शब्द और मलयाचलके पवनकरके यह चैत्रमास विरही जनोंका वध करता है; इससे यह जान पड़ता है कि, विपत्तिमें अमृतभी विष हो जाता है ! ॥ ३४ ॥

आवासः किल किंचिदेव दयितापार्श्वे विलासालसः
कर्णे कोकिलकाकलीकलरवः स्मेरो लतामण्डपः ।
गोष्ठी सत्कविभिः समं कतिपयैः सेव्याः सितांशोः कराः
केषांचित्सुखयन्ति नेत्रहृदये चैत्रे विचित्राः क्षपाः ॥ ३५ ॥

( सं० टी० ) आवास इति । आवासः वसतिः किल इति श्रूयते किंचिदेव स्वल्पकालमात्रमपि दयितायाः प्रियायाः पार्श्वे समीपे विलासेन अलसः मन्दः स्मरेः प्रियश्च भवति । कर्णे कोकिलानां काकली सूक्ष्मध्वनिः तथा कलरवः गंभीरो रवः शब्दः प्रियो भवति । लतानां मण्डपश्च प्रियो भवति । कतिपयैः सत्कविभिः । समं गोष्ठी प्रिया भवति । सितांशोः चंद्रस्य कराः किरणाः सेव्याः भवन्ति । एते पदार्थाः केषांचिन्नेत्रहृदये सुखयन्ति । ये प्रवासिनस्तेषां दुःखरूपा भवन्ति । एवं चैत्रमासादौ क्षपाः निशाः विचित्राः भवन्ति । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३५ ॥

( भा० टी० ) किल किंचित् विलाससे शिथिल हो प्यारीके संग रहना, कानसे कोकिलाके शब्दकी कलकलाहट सुनना और चांदनीका सुख उठाना, ऐसी सामग्रीसे चैत्रमासकी विचित्र रातें किसी पुण्यवान्हीके हृदय और नेत्रोंको सुख देती हुई बीतती हैं ! किलकिंचित् हाव उसे कहते हैं कि, जहां क्रोध, आंसू, हर्ष, भय, प्रीति और रुखाई ये सब भाव एकही समय हों ॥ ३५ ॥

पान्थस्त्रीविरहानलाहुतिकलामातन्वती मञ्जरी
माकन्देषु पिकाङ्गनाभिरधुना सोत्कण्ठमालोक्यते ।
अप्येते नवपाटलापरिमलाः प्राग्भारपाटच्चरा
वांति क्लांतिवितानतानवकृतः श्रीखण्डशैलानिलाः ॥ ३६ ॥

( सं० टी० ) पान्थेति । अन्यत् किं वसन्ते भवति । अधुना माकंदेषु आम्रवृक्षेषु मञ्जरी पान्थकस्य पथिकस्य स्त्री तस्या विरह एवानलोऽग्निस्तस्मिन्नाहुतिकलामातन्वती विस्तारयन्ती सती । एवंभूता मञ्जरी पिकाङ्गनाभिः सोत्कण्ठमालोक्यते । अथ च श्रीखण्डशैलश्चंदनपर्वतस्तत्सम्बन्धिनोऽनिला मारुताः वांति । कथंभूताः ? नवाः चासौ पाटला च तस्याः परिमलानां प्राग्भारपाटच्चराः उत्कर्षस्य चोराः । पुनश्च क्लांतेर्वितानस्य तानवं कुर्वंतीति तथाभूताः । एतादृशे वसन्ते कस्योत्कण्ठा न भवेत् । शार्दूलविक्रीडितं वृत्तम् ॥ ३६ ॥

( भा० टी० ) बटोहियोंकी विरहिनी स्त्रियोंकी विरहाग्निमें आहुतिकला फैलाते हुए जो आमके बौर हैं, उन्हें कोकिला बड़े अभिलाषसे देखती हैं. इस वसन्त ऋतुमें ये नवीन पाटल ( गुलाब ) पुष्पोंकी सुगन्धके उत्कर्षके चुरानेवाले, और विरहविस्तार करनेवाले, मलयाचलके पवनभी गमन कर रहे हैं ॥ ३६ ॥

सहकारकुसुमकेसर-निकरभरामोदमूर्छितदिगन्ते ।
मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ? ॥ ३७ ॥

( सं० टी० ) सहकारेति । सहकारस्याम्रवृक्षस्य 'आम्रश्चूतो रसालोऽसौ

१ परिमलप्राग्भारः ।

सहकारोऽतिसौरभः' इत्यमरः । कुसुमानां केसराणि तेषां निकरः समुदायस्तस्य भरः अतिशयित आमोदो गन्धस्तेन मूर्च्छिता व्याप्ता दिगन्ता यस्मिन् । पुनः कथंभूते? मधुरमधु पुष्परसस्तस्मिन् मधुरा आसक्ता मधुपा भ्रमरा यस्मिन् एतादृशे मधौ वसन्ते कस्य पुरुषस्य मनसि उत्कंठा न भवेत? अपितु सर्वस्यापि भवेदित्यर्थः । आर्यावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३७ ॥

( भा॰ टी॰ ) जिसमें आमके बौरोंके केसरसमूहकी सुगन्धसे दिशायें व्याप्त हो रहीं हैं और मीठे मीठे मकरन्दका पान कर भ्रमर उन्मत्त हो रहे हैं ऐसे ऋतुराजमें किसे उत्कण्ठा नहीं होती ? ॥ ३७ ॥

---

## अथ ग्रीष्मवर्णनम् ।

अच्छाच्छचन्दनरसार्द्रकरा मृगाक्ष्यो
धारागृहाणि कुसुमानि च कौमुदी च ।
मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं
ग्रीष्मे मदं च मदनं च विवर्धयन्ति ॥ ३८ ॥

( सं॰ टी॰ ) ग्रीष्मर्तौ एते पदार्थाः हर्षकामवर्धकाः भवंतीति तत्पदार्थपुरःसरं क्रमप्राप्तं ग्रीष्मं श्लोकत्रयेण वर्णयति–अच्छाच्छेति । अच्छाच्छः विमलतमो यश्चन्दनरसस्तेनार्द्राः करा यासां ता मृगाक्ष्यो मृगनयनाः स्त्रियः तथा च धारा-गृहाणि जलयन्त्रगृहाणि कुसुमानि पुष्पाणि च कौमुदी चंद्रकला मन्दो मरुद्वायुः सुमनसो लताः हर्म्यपृष्ठं शुचि । एते पदार्थाः ग्रीष्मे मदं च मदनं च वर्धयन्ति । वसंततिलकावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३८ ॥

( भा॰ टी॰ ) अति स्वच्छ चन्दनके रससे भिने हुये हाथवाली स्त्रियां, फुहारेवाले मंदिर, सुगन्धित पुष्प, विकसित चांदनी, सुगन्धित पुष्प-युत मन्द मन्द पवन और महलकी श्वेत छत ये सब पदार्थ ग्रीष्मऋ-तुमें कामदेवको व मदको बढ़ाते हैं ॥ ३८ ॥

स्रजो हृद्यामोदा व्यजनपवनश्चन्द्रकिरणा
परागः कासारो मलयजरजः सीधु विशदम् ।
शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो
निदाघे तूर्णं तत्सुखमुपलभन्ते सुकृतिनः ॥ ३९ ॥

(सं० टी०) किंच स्रज इति। स्रजः पुष्पमालाः हृद्यो मनोहारी आमोदः परिमलो यासां ताः। व्यजनस्य तालवृन्तकस्य पवनो वायुः 'व्यजनं तालवृन्तकम्' इत्यमरः। चन्द्रकिरणाः। परागः पुष्परजः। कासारः सरोवरम्। मलयजं चन्दनं तस्य रजः। सीधु मद्यं विशदम्। शुचिः उज्ज्वलः सौधो राजसदनं तस्य उत्सङ्गः उपरिभागः। प्रतनु कोमलं सूक्ष्मं वसनम्। पङ्कजदृशः कमलनयनाः स्त्रियः। एतेषां पदार्थानां ग्रीष्मे सुखं तूर्णं शीघ्रं सुकृतिनो लभन्ते। शिखरिणीवृत्तम्। ल० पू० ॥ ३९ ॥

(भा० टी०) मनोहर सुगंधवाली माला, पंखेका वायु 'चांदनी, पुष्पोंका पराग, तडाग, चंदनकी रज, निर्मल मद्य, श्वेत धामकी अच्छी ऊँची छत, अच्छे मलमलसे महीन वस्त्र और कमलनैनी सुंदर स्त्री इत्यादि पदार्थोंसे ग्रीष्मऋतुमें पुण्यवान् पुरुष सुख उठाते हैं ॥ ३९ ॥

सुधाशुभ्रं धाम स्फुरदमलरश्मिः शशधरः
प्रियावक्त्राम्भोजं मलयजरजश्चातिसुरभि।
स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने
करोत्यन्तःक्षोभं न तु विषयसंसर्गविमुखे ॥ ४० ॥

(सं० टी०) सुधेति। सुधया शुभ्रं धाम गृहम्। स्फुरन्तः अमलाः स्वच्छाः रश्मयः किरणाः यस्यासौ शशधरश्चन्द्रः। प्रियाया वक्त्राम्भोजं मुखकमलम्। अतिसुरभि सुगन्धि मलयजं रजो धूलिश्च। स्रजः पुष्पमालाः हृद्यः मनोहरः आमोदो गन्धो यासां तास्तथाभूताः। तदिदमखिलं सर्वं रागिण्यनुरागवति जने एतेषु पदार्थेषु विषयेषु रागो यस्य तस्मिन् जने। अन्तःक्षोभं करोति। न तु विषयसंसर्गविमुखे जने क्षोभं करोति शिखरिणीवृत्तम्। लक्षणं पूर्वोक्तम् ॥ ४० ॥

(भा० टी०) चूनासे पोता हुआ अच्छा उज्ज्वल धाम, निर्मल चांदनीका चंद्रमा, प्यारीका मुखकमल, सुगंधित चन्दन, अच्छे सुगंधित पुष्पोंकी माला, ये सब वस्तु अनुरागी पुरुषोंके हृदयमें अत्यंत क्षोभ करते हैं; परंतु विषयके संसर्गसे जो विमुख हैं उनके हृदयमें नहीं करते ॥ ४० ॥

---

## अथ वर्षासमयः।

तरुणी चैषा दीपितकामा विकसितजातीपुण्यसुगन्धिः।

उन्नतपीनपयोधरभारा प्रावृट् कुरुते कस्य न हर्षम् ॥ ४१ ॥?

( सं० टी० ) तरुणी चैषेति । एषा प्रावृट् तरुणीव युवतिरिव कस्य पुरुषस्य हर्षं न कुरुते ? अपितु सर्वस्यापि हर्षं कुरुते इत्यर्थः । ( तनुते इत्यपि पाठः ) कथंभूता प्रावृट् ? तरुणी च । दीपित उद्दीपितः कामो यया ( पक्षे यस्यां च ।) विकसिता प्रफुल्लिता जातिर्मालती लता यस्याम् । ( पक्षे केशादौ धारणत्वेन विकसिता जातयो जातिपुष्पाणि यस्याम् ) अत एव पुण्यो मनोज्ञः सुगन्धो यस्याम् । ( पक्षे अङ्गादि सौगन्ध्यम् ) तरुणीपक्षेऽपि तथैव ज्ञातव्यम् । पुनः कथंभूता ? उन्नता उच्चाः पीनाः पुष्टाः पयोधराः मेघास्तेषां भर एव भारः अतिशयः यस्यां तथाभूता ? ( पक्षे उन्नतौ उच्चौ पीनौ पुष्टौ यौ पयोधरौ स्तनौ तयोः भारः तस्याः इति ) । उपचित्राद्वृत्तम् । तदुक्तं वृत्तरत्नाकरे—"नवमे भवति गुरावुपचित्रा" इति ॥ ४१ ॥

( भा० टी० ) तरुणीके वेषवाली, कामदेवको उद्दीपित करनेवाली, जातीपुष्पके सुगन्धको विकाश करनेवाली, जिसके पुष्ट पयोधरके उभाड उन्नत हैं ऐसी वर्षाऋतु किसको नहीं हर्षित करती है. जाती जूही लता, वा जावित्री पयोधर मेघ और स्तनकोभी कहते हैं ॥ ४१ ॥

वियदुपचितमेघं भूमयः कन्दलिन्यो
नवकुटजकदम्बामोदिनो गन्धवाहाः ।
शिखिकुलकलकेकारावरम्या वनान्ताः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ४२ ॥

( सं० टी० ) वियदिति । वियद्गगनमुपचिता मेघा यस्मिन् तत् उपचितमेघम् । कन्दला जाताः यासु ताः कन्दलिन्यो भूमयः । नवांकुरयुक्ता नवाः नूतनाः कुटजाः कदम्बाश्च तेषामामोदो गन्धो येषु तथा भूताः एवं तु ते गन्धवाहः । वायवः शिखिकुलस्य मयूरकुलस्य कलाः अव्यक्तमधुराः केकारावाः वाणीशब्दास्तै रम्या वनान्ताः वनदेशाः । एते प्रावृषि प्रावृट्काले सुखिनमसुखिनं वा सर्वमुत्कंठयंति मदनाविर्भावेन उत्कण्ठितं कुर्वन्ति । मालिनीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४२ ॥

( भा० टी० ) मेघोंसे व्याप्त आकाश और प्रफुल्लित पृथ्वी, नये नये

अंकुरोंपर ओसके जलसे पूर्ण, तथा नवीन कुटज और कदम्बके पुष्पोंके समूहकी सुगंधिवाले वायु और मयूरोंके झुंडकी सुन्दर वाणीसे रमणीय वनके प्रांतभाग ये पदार्थ वर्षाऋतुमें सुखी और दुःखी पुरुषोंको उत्कण्ठा देते हैं ! ॥ ४२ ॥

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः ।
वसुधाकंदलधवला दृष्टिं पथिकः क्व यातु संत्रस्तः ? ॥४३॥

( सं० टी० ) स्त्रीविरहखिन्नानां मार्गस्थानां मेघादिदर्शनेन स्थितिमाह—उपरीति । कश्चन पथिकः मार्गं गच्छति । यस्य उपरि घनं निबिडं घनानां पटलम् । तिर्यगागमनप्रदेशे नर्तिता मयूरा येषु ते गिरयः पर्वताः । वसुधा पृथ्वी कन्दलैः धवला । एवं सति पथिकः विरहेण क्व तुष्टिं संतोषं यातु प्राप्नोतु ? । तस्मात्प्रेयसीसहवासो अतीव सुखद इति भावः । वृत्तमार्या । ल० पू० ॥ ४३ ॥

( भा० टी० ) ऊपर घनघोर मेघोंकी घटा छाय रही हैं, दहिने बांए पहाड़ोंमें मयूर नाच रहे हैं, नीचे भूमि नवीन अंकुरोंसे युक्त हो रही है, ऐसे समयमें दीन बटोही आनन्दको कहां प्राप्त होवें ? अर्थात् चारोंओर उज्ज्वल वे पदार्थ विरहके उद्दीपनही करनेवाले हैं ॥ ४३ ॥

इतो विद्युद्वल्ली विलसितमितः केतकितरोः
स्फुरद्गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः ।
इतः केकिक्रीडाकलकलरवः पक्ष्मलदृशां
कथं यास्यन्त्येते विरहदिवसाः संभृतरसाः ? ॥ ४४ ॥

( सं० टी० ) पक्ष्मलदृशां स्त्रीणां विरहव्यथामाह—इत इति । इतः विद्युद्वल्ली विद्युल्लता । इतः केतकितरोः स्फुरन्नतीव गन्धः । इतः प्रकर्षेण उद्यज्जलदनिनदस्य मेघशब्दस्य स्फूर्जितं स्फुरणम् । इतः केकिनां मयूराणां क्रीडासु कलकलरवः बहुभिः क्रियमाणो कोलाहलाख्यः शब्दः । एवं सति पक्ष्मलदृशां स्त्रीणां संभृतरसाः रसवन्तः विरहदिवसा एते कथं यास्यन्ति गमिष्यंति ? । शिखरिणीवृत्तम् । ल० पू० ॥ ४४ ॥

( भा० टी० ) एक ओर विद्युच्छटाका विलास, एक ओर केतकीके फूलोंकी अतीव सुगन्ध, एक ओर उमड़े मेघोंकी गर्जना, और एक

ओर मयूरोंकी क्रीड़ाओंमें कलकल ( मधुर ) शब्द ये सब जहां एकत्र हैं, ऐसे ये रसभरे विरहके दिन स्त्रियोंके कैसे बीतेंगे? ॥ ४४ ॥

असूचीसंसारे तमसि नभसि प्रौढजलदा-
ध्वनिप्राये तस्मिन् पतति दृषदां नीरनिचये ।
इदं सौदामिन्याः कनककमनीयं विलसितं
मुदं च म्लानिं च प्रथयति पथिष्वेव सुदृशाम् ॥ ४५ ॥

( सं० टी० ) विरहस्त्रीणां ग्लानिं हर्षं चाह-असूचीति । असूचीसंसारे न सूच्यते संसारो यस्मिन् तमसि अंधकारे एवंभूते नभसि श्रावणमासे 'नभः खं श्रावणो नभाः' इत्यमरः । कथंभूते ? प्रौढाश्च ते जलदाश्च तेषां ध्वनिप्राये । दृषदां करकोपलानां नीरेण जलेन सह निचये समूहे पतति सति । एवमिदं सौदामिन्या विद्युतो विलसितं स्फुरणम् । कनकवत्कमनीयं सुंदरं सुदृशां स्त्रीणां पथिष्वेव मार्गेष्वेव मुदं हर्षं च विरहिणां म्लानिं च म्लानतां च प्रथयति प्रकटीकरोति । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४५ ॥

( भा० टी० ) जिसमें कोईभी वस्तु सूझती नहीं ऐसे गाढ़ अन्धकार-वाले श्रावणमासमें बड़े मेघोंके शब्द और पत्थरसहित जलवृष्टि और सुवर्णवत् सुन्दर बिजुलीका बारबार चमकना स्त्रियोंको मार्गोंमेंही सुख दुःख उत्पन्न करता है ॥ ४५ ॥

आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते
शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिंग्यते ।
जाताः शीतलशीकराश्च मरुतो वान्त्यन्तखेदच्छिदो
धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे ॥ ४६ ॥

( सं० टी० ) धन्यपुरुषाणां सुदिनतामाह-आसारेति । मेघच्छन्ने दुर्दिने । दिनोदये जातेऽपि सति प्रियतमैः पतिभिः यदा बहिर्हर्म्यतः गृहात् यातुं गन्तु न शक्यते, तदा शीतोत्कंपनिमित्तमायतदृशा विस्तीर्णनेत्रया स्त्रिया गाढमत्यन्तं यथा समालिंग्यते । अथ च मरुतो वायवः शीतलाः शीकरा अंबुकणाः येषां ते अन्तखेदच्छिदो जाताः उत्पन्नाः । एवं धन्यानां पुण्यवतां

प्रियासंगमे स्त्रीसंगमे दुर्दिनमपि सुदिनतां याति प्राप्नोति । बतेति हर्षे । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४६ ॥

( भा० टी० ) वर्षाकी झड़ीमें प्रियतम ( पति ) धामके बाहर नहीं निकल सकते और बड़ा जाड़ा लगता है व देह कांपता है इसी निमित्त विशाल नेत्रोंवाली स्त्रियोंकरके आलिंगन करे जाते हैं और ठंढे ठंढे जलके कणोंसहित वायु मैथुनके अन्तमें श्रम हरनेवाले होकर बहते हैं; ऐसे धन्य पुरुषोंको प्यारीके संगमें दुर्दिनभी सुदिन हो जाते हैं! ॥ ४६ ॥

## अथ शरद्वर्णनम् ।

अर्धं नीत्वा निशायाः सरभससुरतायासखिन्नश्लथाङ्गः
प्रोद्भूतासह्यतृष्णो मधुमदनिरतो हर्म्यपृष्ठे विविक्ते ।
संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं कर्करीतो
ज्योत्स्नाभिन्नाच्छधारं पिबति न सलिलं शारदं मंदभाग्यः॥४७॥

( सं० टी० ) क्रमप्राप्तं शरदृतुं वर्णयति-अर्धेति । कश्चन पुरुषः कामी निशायाः अर्धं नीत्वा पश्चात् सरभसं सुरते मैथुने आयासः कष्टं तेन खिन्नः खेदं प्राप्तः, अत एव श्लथांगः सन् हर्म्यपृष्ठे प्रासादोपरिभागे विविक्ते एकांते प्रकर्षेण उद्भूता असह्या तृष्णा तया मधुमदनिरतः शारदं सलिलं न पिबति स मन्दभाग्यः । कथंभूतं सलिलम् ? संभोगक्लांता कष्टीभूता कांता तस्याः शिथिलभुजलता तया आवर्जितं आनीतम् । वृत्तं स्रग्धरा " म्रौ भ्रौ यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् " इति लक्षणात ॥ ४७ ॥

( भा० टी० ) आधी रात व्यतीत होनेपर वेगसहित मैथुनके श्रमसे जिसके अंग थकित हैं, ऐसा जो पुरुष अत्यन्त प्यासा होकरभी महलपर एकान्त ठौरमें बैठके मद्यही पीता है किंतु मैथुनमें थकीहुई स्त्री शिथिलभुजाओंसे झारी लाकर जिसे देती है और चांदनीमें स्वच्छ धार जिसकी देख पडती है ऐसा शरदऋतुका जल नहीं पीता सो मंदभागी है ॥४७॥

## अथ हेमन्तवर्णनम् ।

हेमन्ते दधिदुग्धसर्पिरशना मांजिष्ठवासोभृतः

काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः ।
पीनोरःस्थलकामिनीजनकृताश्लेषा गृहाभ्यन्तरं
तम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ४८ ॥

( सं० टी० ) क्रमप्राप्तं हेमन्तं वर्णयति-हेमन्तेति । हेमन्ते ऋतौ केचित्पुरुषाः दधि च दुग्धं च सर्पिः घृतं च एतानि अशनं येषाम् । ते मांजिष्ठं मंजिष्ठया रंजितं वासो वस्त्रं बिभ्रति ते । काश्मीरं कुंकुमकेसरं तस्य द्रवः रसः तेन सान्द्रं निबिडं दिग्धमुपलिप्तमेवंभूतं वपुः येषाम् । तैर्विचित्रैः रतैः सुरतैः खिन्नाः खेदं प्राप्ताः । पीनं मांसलमुरःस्थलं यस्य एवंभूतः कामिनीजनः स्त्रीजनस्तेन कृताः आश्लेषा आलिंगनानि येषाम् । ताम्बूलीदलैः पूगैः पूरितानि मुखानि येषां ते । एवंभूताः धन्याः गृहाभ्यंतरं गृहमध्ये सुखं शेरते निद्रां कुर्वन्ति । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४८ ॥

( भा० टी० ) दही, दूध, घृत और सुगन्ध शिखरन भोजन किये, मँजीठके रँगे वस्त्र धारण किये, केशर कस्तुरीका सघन लेप सर्वांगमें किये, अनेक प्रकारके आसनभेदकी रतिसे खिन्न, पुष्ट जंघा और स्तनों-वाली स्त्रियां जिन्हें लपटती हैं और मुखमें पान व सुपारी खाते हैं ऐसे धन्य पुरुषही हेमंतऋतुमें घरके भीतर सुखसे सोते हैं ॥ ४८ ॥

---

## अथ शिशिरवर्णनम् ।

चुम्बन्तो गण्डभित्तीरलकवति मुखे सीत्कृतान्यादधाना
वक्षःसूत्कंचुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ।
ऊरूनाकम्पयंतः पृथुजघनतटात्स्रंसयंतोऽशुकानि
व्यक्तं कांताजनानां विटचरितकृतः शैशिरा वांति वाताः ॥४९॥

( सं० टी० ) द्वाभ्यां श्लोकाभ्यां शिशिरर्तुं वर्णयति-चुम्बन्त इति । शि-शिरे कामिनः भोगकाले यथा कुर्वन्ति तथा वायवोऽपि कुर्वन्ति । इति शेषः । अलकवति केशवति मुखे गण्डभित्तीः कपोलप्रदेशान् प्रति प्रबला वायवः मुखे केशान् इतस्ततो नयन्ति तेनैव मिषेण चुम्बन्ति । पुनः कथम् ? सीत्कृतं आदधाना शीतातिशयेन सर्वेपि सीत्कृतानि कुर्वन्ति । तान्येव वायुभिः कृतानि । उत्कंचुकेषु वक्षस्सु स्तनभारे पुलकोद्भेदमापादयन्तः ऊरूनाकम्पयन्तः

पृथुजघनतटात् अंशुकानि स्रंसयंतः निष्कासयंतः । एवं कांताजनानां विटचरितकृतः विटा भांडाः तेषां चरितमिव कुर्वन्ति । ते शैशिराः शिशिराः शिशिरे भवाः वाताः वायवो वांति वहन्ति । स्रग्धरावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४९ ॥

( भा० टी० ) कामीपुरुष भोगकालमें जैसे आचरण करते हैं, तद्वत् यह शशिरऋतुका वायुभी करता हैः—स्त्रियोंके केशवाले मुखमें कपोल ( गाल ) रूप भीतका चुंबन करता है, और शीतके सबब सीत्कारशब्द करता है, और स्तनोंको रोमांचित करता है और जंघाओंको कँपाता है, तथा पुष्ट जघनतटसे वस्त्रको दूर करता है, इसप्रकार विट (स्त्रीलंपट) के समान चरित हैं जिसके ऐसा शिशिरऋतुसंबंधी वायु चलरहा है॥४९॥

केशानाकलयन्दृशो मुकुलयन्वासो बलादाक्षिपन्
आतन्वन्पुलकोद्गमं प्रकटयन्नालिंग्य कम्पं शनैः ।
वारंवारमुदारसीत्कृतकृतो दन्तच्छदान्पीडयन्
प्रायः शैशिर एष संप्रति मरुत्कांतासु कांतायते ॥ ५० ॥

( सं० टी० ) केशानिति । अथ शैशिरः मरुत्संप्रति इदानीं कान्तासु स्त्रीषु कान्तायते कान्त इव भवति । तत्कथम् ? केशानाकलयन्, दृशः दृष्टीः मुकुलयन्, वासः वस्त्रं बलादाक्षिपन्निष्कासयन्, पुलकाः रोमांचाः तेषामुद्गममातन्वन् विस्तारयन्, आलिंग्य शनैः कंपं प्रकटयन्, वारंवारमुदाराणि बहूनि सीत्कृतानि कारयन्, दन्तच्छदान् ओष्ठान् पीडयन् । एवं प्रायः कांत एव भवति । ऋतुवर्णनमिति कामिनां विषयिणां मनोरथास्तथा इति भावः । कथम् ? तेषां कर्तव्यानि ज्ञात्वा त्यक्तव्यानि च इति कारणादुक्तानि । अधुना पक्षद्वयानिरूपणम् । वृत्तं पूर्वोक्तम् ॥ ५० ॥

( भा० टी० ) बालोंको बिखेरता, आखें किंचित् मूंदता, साड़ी बलात्कारसे उठाता, देहमें रोमांच करता, चलनेमें उद्वेग और कम्प प्रगट करता, बारबार सीसी करनेसे होंठोंको पीड़ित करता, इस प्रकारका शिशिरऋतुका वायु स्त्रियोंविषे पतिकासा आचरण करता है !॥ ५० ॥

असाराः सन्त्वेते विरतिविरसायासविषया
जुगुप्सन्तां यद्वा ननु सकलदोषास्पदमिति ।

तथाऽप्यन्तस्तत्त्वे प्रणिहितधियामप्यतिबल-
स्तदीयोऽनाख्येयः स्फुरति हृदये कोऽपि महिमा ॥ ५१ ॥

( सं० टी० ) असारा इति । यत् यस्मात् कारणात् वा इति विकल्पे । ननु इति वितर्के । इदं सकलदोषास्पदं इति जगुप्सतां निन्दां कुर्वताम् । एते विरतिविरसाः विरतौ विरसा एवंभूता विषयाः असाराः निःसाराः सन्तु । तथापि तत्त्वे प्रणिहितधियां वशीकृतबुद्धीनामपि तदीयः तस्याः स्त्रियाः अयं तदीयः कोऽपि महिमा । अतिबलो बलवान् । न आख्येयः वक्तुं न शक्यः । एवंभूतः स्फुरति इदमेवाश्चर्यम् । शिखरिणीवृत्तम् । लक्षणं पूर्वोक्तम् ॥५१॥

( भा० टी० ) यह सब भोगविषय असार और वैराग्यमें विरस करनेवाले हों और इन्हें सब दोषोंका गृह समझकर यदि लोग निंदाभी करें तौभी इन विषयोंकी महिमा अतिबलवान् व कहनेके योग्य नहीं; जो कि, अंतस्तत्त्व अर्थात् ब्रह्मविचारमें जिनकी बुद्धि स्थिर हो रही है उनके हृदयमेंभी प्रकाशित होता है ॥ ५१ ॥

भवन्तो वेदान्तप्रणिहितधियामाप्तगुरवो
विदग्धालापानां वयमपि कवीनामनुचराः ।
तथाप्येतद्ब्रूमो न हि परहितात् पुण्यमधिकं
न चास्मिन् संसारे कुवलयदृशो रम्यमपरम् ॥ ५२ ॥

( सं० टी० ) अस्मिन्संसारे कुवलयदृशः परं रम्यं नास्तीत्याह—भवन्त इति । भवन्तो यूयं वेदान्ते प्रकर्षेण निहिता बुद्धिर्यैस्तेषामाप्ताश्च गुरवश्च । वयं तु विदग्धाः आलापाः शब्दा येषां तथाभूतानां कवीनां अनुचराः सेवकास्तथापि नहि परहितात्पुण्यमधिकम् । एतद्ब्रूमो अस्मिन्संसारे कुवलयदृशः अपरं रम्यं नास्ति इति जानीमः । शिखरिणीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५२ ॥

( भा० टी० ) आप वेदांतवेत्ताओंके मान्य गुरु अर्थात् शिक्षक हो और हमभी विचित्रकाव्यशास्त्रविनोदी कवियोंके दास हैं, तथापि यह हम ठीक निवेदन करते हैं कि इस संसारमें पराया हित करनेसे अधिक अन्य पुण्य नहीं और कमलनयनी स्त्रियोंसे अधिक दूसरी सुंदर वस्तु नहीं ॥ ५२ ॥

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-
र्द्वयमिह पुरुषाणां सर्वदा सेवनीयम् ।
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ५३ ॥

( सं० टी० ) पुरुषैः अधिकारभेदेन द्वयं सर्वदा सेव्यमित्याह-किमिति । इह लोके बहुभिरुक्तैर्वचनैः किं प्रयोजनम् ? । कथंभूतैरुक्तै ? युक्तिशून्यैः प्रलापैः अर्थविरहितैः । तर्हि मयोच्यते तच्छ्रूयताम् । इह पुरुषाणां पुरुषैर्द्वयं सर्वदा सेवनीयम् । किं अभिनवा नूतना अपूर्वा मदस्य लीलास्ताभिः लालसं सुन्दरीणां स्तनभरेण परिखिन्नं यौवनं सेवनीयम् । अथवा वनं सेवनीयम् । मालिनी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५३ ॥

( भा० टी० ) इस लोकमें बहुतसे युक्तिशून्य प्रलाप अर्थात् बकवादसे क्या प्रयोजन है ? किन्तु पुरुषोंके दोही वस्तु सर्वदा सेवने योग्य हैं कि, नवीन मदांधलीलाभिलाषी और स्तनभारसे खिन्न ऐसे सुंदरियोंका यौवन अथवा बन ॥ ५३ ॥

सत्यं जना वच्मि न पक्षपाताल्लोकेषु सर्वेषु च तथ्यमेतत् ।
नान्यन्मनोहारि नितम्बिनीभ्यो दुःखैकहेतुर्न च कश्चिदन्यः ५४

( सं० टी० ) सुखदुःखयोर्हेतुभूताः स्त्रियं एवेत्याह-सत्यमिति । भो जनाः ! अहं सत्यं वच्मि वदामि । न पक्षपातात् । सर्वेषु इदमेतत्तथ्यं यथार्थम् । तत्किं नितम्बिनीभ्यः स्त्रीभ्यः मनोहारि मनस्तुष्टिकरं अन्यद्द्वितीयं नास्ति । विषयिणाम् । परमार्थिनां तु स्त्रीभ्यः दुःखैकहेतुः दुःखस्य कारणमन्यन्नास्ति । " स्यादिंद्रवज्रा यदि तौ जगौ गः " इति लक्षणादिन्द्रवज्रावृत्तम् ॥ ५४ ॥

( भा० टी० ) हे लोगो ! यह हम सत्य कहते हैं; इसमें कुछभी पक्षपात नहीं करते. संसारमें यह विदित है कि, स्त्रियोंके सिवाय और कोई मनहरण करनेवाली और दुःखदायी वस्तुही नहीं है ! ॥ ५४ ॥

---

## अथ दुर्विरक्तप्रशंसा ।

तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ।
यावदेव न कुरंगचक्षुषां ताड्यते चपललोचनाञ्चलैः ॥ ५५ ॥

( सं० टी० ) विविकी पुरुषो यावत्कुरङ्गचक्षुषां कटाक्षैः न ताड्यते तावदेव तस्य विवेकः स्फुरतीति कुरङ्गदृशां स्त्रीणां विवेकध्वंसत्वमाह—तावदिति । कुरङ्गचक्षुषां हरिणीदृशां चपलानि चञ्चलानि लोचनानि नेत्राणि तान्येव अञ्चलाः प्रांतभागास्तैर्यावदेव न ताड्यते तावदेव कृतिनां विवेकिनां हृदि अंतःकरणे एष निर्मलः कामादिमलरहितो विवेकदीपकः स्फुरति । एवं च स्त्रीकटाक्षेण विवेकिनामपि विवेकध्वंसो भवतीति तात्पर्यम् । "रो नराविह रथोद्धता लगौ" इति लक्षणाद्रथोद्धतावृत्तम् ॥ ५५ ॥

( भा० टी० ) विवेकियोंकेभी हृदयमें यह निर्मलविवेकरूप दीपक तभीतक प्रकाशित रहता है, कि जबतक मृगनयनी स्त्रियोंके चंचल लोचनरूपी अंचलसे नहीं ताडित किया जाता ॥ ५५ ॥

वचसि भवति संगत्यागमुद्दिश्य वार्ता
श्रुतिमुखरमुखानां केवलं पण्डितानाम् ।
जघनमरुणरत्नग्रन्थिकाञ्चीकलापं
कुवलयनयनानां को विहातुं समर्थः ? ॥ ५६ ॥

( सं० टी० ) केवलं सर्वे जनाः स्त्रीसंगत्यागवार्ताकारिणो भवन्ति, परंतु तज्जघनत्यागी पुरुषो दुर्लभ इत्याह—वचसीति । श्रुतिमुखरमुखानां बहुवक्तॄणां पंडितानां संगत्यागं स्त्रीसंगत्यागमुद्दिश्य वचस्येव केवलं वार्ता भवति । न तु त्यागं कुर्वन्ति । किमिति कुवलयनयनानां कमलनयनानां स्त्रीणां अरुणानां रत्नानां मणीनां ग्रन्थिः कांचीकलापो यस्मिन् तत् जघनं विहातुं त्यक्तुं कः समर्थः ? न कोऽपीत्यर्थः । मालिनीवृत्तम् । तदुक्तं वृत्तरत्नाकरे—"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ ५६ ॥

( भा० टी० ) संगत्याग करनेकी कथा शास्त्रवक्ता पंडितोंके मुखसे केवल कथनमात्रही है! नहीं तो लालरत्नजडित करधनीवाली कमलनैनी स्त्रियोंके जघनस्थल छोड़नेमें कौन समर्थ है ? ॥ ५६ ॥

स्वपरप्रतारकोऽसौ निन्दति योऽलीकपण्डितो युवतीः ।
यस्मात्तपसोऽपि फलं स्वर्गस्तस्यापि फलं तथाऽप्सरसः ॥ ५७ ॥

( सं० टी० ) स्वपरेति । अलीकपण्डितो यः पुरुषः युवतीर्निन्दति असौ स्वस्यापि परस्यापि प्रतारकः प्रतारणामात्रं अलीकं वृथा करोति । किमिति यस्मात्कारणात्तपसोऽपि फलं स्वर्गस्तस्यापि फलमप्सरसः । " त्रिष्वंशकेषु पादो दलयोराद्येति दृश्यते यस्याः । पथ्येति नाम तस्याश्छंदोविद्भिः समाख्यातम् " इति लक्षणात् पथ्यावृत्तम् ॥ ५७ ॥

( भा० टी० ) जो स्त्रियोंकी निंदा करता है वह झूँठा पंडित आप तो ठगाही गया, पर औरोंकोभी ठगाता है; क्योंकि तपस्याका फल स्वर्ग है और स्वर्गका फल अप्सराभोग है ॥ ५७ ॥

मत्तेभकुम्भदलने भुवि सन्ति शूराः
केचित्प्रचण्डमृगराजवधेऽपि दक्षाः ।
किंतु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्पदर्पदलने विरला मनुष्याः ॥ ५८ ॥

( सं० टी० ) मत्तेभादिगर्वहरणे शूराः संति, परंतु कंदर्पदर्पदलने मनुष्या विरला इत्याह-मत्तेभेति । मत्तो मन्दोन्मत्तो यो इभो गजः तस्य कुम्भो गण्डस्थलं तस्य दलने विदारणे भुवि शूराः संति । केचित्प्रचण्डोऽत्यंतकोपनः यो मृगराजः सिंहः तस्य वधेऽपि हननेपि दक्षाः समर्थाः संति । किंतु कंदर्पः कामस्तस्य यो दर्पो गर्वस्तस्य दलने विदारणे मनुष्याः विरलाः संतीति । बलिनां बलवतां पुरतोऽग्रभागे प्रसह्य हठात् 'प्रसह्य तु हठार्थकम्' इत्यमरः । अहमित्यध्याहारः ब्रवीमि । वसंततिलकावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५८ ॥

( भा० टी० ) उन्मत्त हाथीके मस्तक विदारनेवाले शूर इस पृथ्वीपर अनेक हैं, और प्रचंड सिंहके मारनेमें दक्ष योद्धाभी कितनेही ( बहुतही ) हैं; परन्तु बलवानोंके आगे हम हठ करके यह कहते हैं कि-कामदेवके मदका दमन करनेवाले कोई विरलेही पुरुष होंगे ! ॥ ५८ ॥

सन्मार्गे तावदास्ते प्रभवति स नरस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ ५९ ॥

( सं० टी० ) नरो यावद्विलासवतीनां दृक्शरैर्विद्धो न भवति तावदेव सन्मार्गादिकं कुरुते इत्याह–सन्मार्गेति । नरस्तावत्सन्मार्गे आस्ते । स नरः इन्द्रियाणां जेता तावदेव प्रभवति, अर्थात् इन्द्रियजये तावदेव समर्थो भवति । तावल्लज्जां विधत्ते । विनयमपि तावदेव समालम्बते । यावल्लीलावतीनां विलासवतीनां एते दृष्टिबाणाः हृदि हृदये न पतन्ति । कथंभूताः बाणाः ? भ्रूरेव चापो धनुः तेन आकृष्टाश्च ते मुक्ताश्च । तु पुनः श्रवणपथं कर्णपथं गताः कर्णपर्यंतं गताः । पुनः कथंभूताः ? नीलपक्ष्माणः नीलानि नेत्रपक्ष्माणि त एव पुंखाः पक्षा येषां ते । पुनः कथंभूताः ? धृतिं धैर्यं मुष्णंति चोरयंति ते धृतिमुषः । वृत्तं स्रग्धरा । लक्षणं पूर्वोक्तम् ॥ ५९ ॥

( भा० टी० ) पुरुष सत् मारगमें तभीतक रहता है, इंद्रियोंको उसी समयतक वशमें रख सक्ता है, और लज्जा विनयवान्भी उसी कालतक रहता है कि, जबतक श्यामबरौनीरूपी पंख धारण किये, भौंहरूपी धनुषकरके कानोंतक खैंचे गये और धैर्य छुड़ानेवाले लीलावती सुंदर स्त्रियोंके नैनरूपी बाण छूटकर हृदयमें नहीं लगते ! ॥ ५९ ॥

उन्मत्तप्रेमसंरम्भादारभन्ते यदंगनाः ।
तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥ ६० ॥

( सं० टी० ) आदरपूर्वकं अङ्गनाभिः कार्यं कर्म तस्योल्लंघने ब्रह्मापि न समर्थ इत्याह–उन्मत्तेति । उन्मत्तमविचारितं यत्प्रेम तस्य संरंभादादरात् यत्कार्यमङ्गनाः स्त्रियः आरभन्ते । तत्र प्रत्यूहं विपरीतं कर्तुं ब्रह्मापि खलु निश्चयेन कातरः असमर्थः । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ६० ॥

( भा० टी० ) अतिप्रेमके उमंगसे उन्मत्त होकर स्त्रीलोग जिस कामका आरम्भ कर देती हैं, उस कामके रोकनेको ब्रह्माकीभी शक्ति नहीं ! ॥ ६० ॥

तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता ।
यावज्ज्वलति नाङ्गेषु हतः पञ्चेषुपावकः ॥ ६१ ॥

( सं० टी० ) यावत्पुरुषः कामवशगो न भवति तावदेव महत्त्वादयो गुणाः संतीत्याह–तावदिति । यावत्पुरुषस्यांगेषु अवयवेषु पञ्चेषुः मदन एव

पावकोऽग्निर्न ज्वलति । तावदेव महत्त्वं पूज्यत्वं पाण्डित्यं कुलीनता विवेकित्वं सदसद्विवेकित्वं तिष्ठति । वृत्तमनुष्टुप् ॥ ल० पू० ॥ ६१ ॥

( भा० टी० ) बड़ाई, पंडिताई, विवेकता और कुलीनता ये सब मनुष्यकी देहमें तभीतक रहती हैं; जबतक शरीरमें कामाग्नि नहीं प्रज्वलित होता ॥ ६१ ॥

शास्त्रज्ञोऽपि प्रथितविनयोऽप्यात्मबोधोऽपि बाढं
संसारेऽस्मिन् भवति विरलो भाजनं सद्गतीनाम् ।
येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती
वामाक्षीणां भवति कुटिलभ्रूलताऽऽकुञ्चिकेव ॥ ६२ ॥

( सं० टी० ) शास्त्रज्ञ इति । शास्त्रं जानातीति शास्त्रज्ञः प्रथितविनयश्च । बाढमत्यंतमात्मबोधः ज्ञानी सद्गतीनां उत्तमगतीनां भाजनं पात्रम् । एतादृशः पुरुषः अस्मिन्संसारे विरलः कदाचित् क्वचिद्भवति । तर्हि सर्वेऽपि तादृशाः कुतो न भवंति । तत्र कारणमस्ति । येन कारणेन एतस्मिन् संसारे वामाक्षीणां सुनयनानां स्त्रीणां कुटिला वक्रा भ्रूलता आकुंचिका इव भवति आकर्षणमिव भवति । कथंभूता भ्रूलता ? निरयनगरस्य द्वारमुद्घाटयंती उच्चाटयंति " मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् " इति लक्षणात् मंदाक्रांता वृत्तम् ॥ ६२ ॥

( भा० टी० ) शास्त्रज्ञ और विनयपूर्वकभी प्रसिद्ध हो, परन्तु इस संसारमें दृढतासे आत्मज्ञानी तथा सद्गतिका पात्र कोई विरलाही पुरुष होता है. इस हेतु कि, यहां नरकनगरके द्वारका ताला सुंदर नेत्रवाली स्त्रियोंकी टेढ़ी भौंहलता घूमती कुंजीकी नांई खोलती है ॥ ६२ ॥

कृशः काणः खंजः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः ।
क्षुधाक्षामो जीर्णो पिठरजकपालार्पितगलः
शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ ६३ ॥

( सं० टी० ) मदनवेगोऽतिदुःसह इति श्वदृष्टांतेनाह–कृशेति । कृशः क्षीणः ।

 

काणः एकनेत्ररहितः, खंजः एकपादेन हीनः, श्रवणरहितः, पुच्छविकलः, व्रणी सर्वांगे व्रणा यस्य, पूयेन क्लिन्नः लिप्तः, कृमीणां कुलं बाहुल्यं तस्य शतैः आवृततनुः, क्षुधया क्षामः कष्टीभूतः, जीर्णः वृद्धोऽपि, पिठरः स्थालीति नाम्ना प्रसिद्धः मृन्मयपात्रः "पिठरः स्थाल्युखा" इत्यमरः । तस्मात् जातः । कपालः कंठः सः अर्पितः गले येन एतादृशः श्वा शुनीमनु पृष्ठत एति । अतो मदनः हतमपि आदौ शरीरावस्थया मृतप्रायं निहंति मारयति । विवेको नास्तीत्यर्थः । शिखरिणीवृत्तम् । ल० पू० ॥ ६३ ॥

( भा० टी० ) मदनका वेग बहुत कठिन है. जैसे—दुबला, काना, लँगडा, कनकटा, दुमटुट्टा, शरीरमें क्षतवाला, उसमेंसे पीब बह रही है, हजारों कीड़े जिसमें भरे हैं और क्षुधासे पीडित, गलेमें हंडिका मुँह अटक रहा है ऐसे ऐसे क्लेशोंसे व्याप्त होनेपरभी कुत्ता कुतियाके पीछे २ दौड़ता है. खेदकी बात है कि, जो अपने शरीरकष्टसे मरता है उसकोभी यह मदन मारता है! ॥ ६३ ॥

स्त्रीमुद्रां झषकेतनस्य जननीं सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यांति कुधियो मिथ्याफलान्वेषिणः ।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचित् पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ६४ ॥

( सं० टी० ) यथा लोके राजा दण्डयति तथा स्त्रीरूपमुद्रया कामाख्यो राजा सर्वान् दण्डयतीत्याह—स्त्रीति । राज्ञो मुद्रया सर्वं कार्यं भवति । अतो झषकेतनस्य मदनस्य स्त्री मुद्रा भवति । अनया सर्वं भवति । अतस्तां स्त्रीमुद्रां प्रविहाय त्यक्त्वा ये कुधियः कुत्सितबुद्धयः यानि मिथ्याफलानि स्वर्गादिकानि अप्रत्यक्षाणि तानि अन्वेषयन्ति तच्छीलाः भवन्ति च । ते मूढाः । कथंभूतां स्त्रीमुद्राम् । झषकेतनस्य मदनस्य जननीमुत्पादयित्रीं सर्वार्थानां सम्पादनं करोतीति तथाभूताम् । यस्याधीने मुद्रा तस्य सर्वाः सम्पदो भवंति यो मुद्राया उलंघनं करोति तस्य राजा दण्डकरो भवति मारयति च । अतो मदनेन ते मूढास्तेनैव कर्मणा निहत्य निर्दयतरं यथा स्यात्तथा

नग्नीकृता मुण्डिताश्च । केचित्पंचशिखीकृताः केचिज्जटिलाः । केचिदपरे कापालिकाः पात्रं करे धृत्वा भिक्षाटनं कारिताः । राजापि येनानयः कृतः तस्य एवमेव दण्डं करोतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६४ ॥

( भा० टी० ) स्त्रियां सब अर्थ और संपतकी करनेवाली कामदेवकी मुद्रा हैं. जो मूढ व कुबुद्धि पुरुष उन्हें छोड़ स्वर्गादिककी इच्छासे निकल भागते हैं, उन्हें विरक्तके वेषमें न समझो; बरन् कामदेवने दया त्यागके दण्ड कर उनमेंसे किसीको नंगा किया, किसीका सिर मुंडवाया, किसीके पांच चोटियें कीं, किसीको जटा रखवाया, और किसीके हाथमें ठीकरा दे भीख मँगवाया ! ॥ ६४ ॥

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिंद्रियनिग्रहो यदि भवेद्विंध्यस्तरेत्सागरम् ॥ ६५ ॥

( सं० टी० ) इंद्रियनिग्रहोऽतिदुर्घट इति विश्वामित्रादिदृष्टांतेनाह–विश्वामित्रेति । वातं वायुं च अम्बु उदकं च शुष्कपर्णानि च अश्नन्ति भक्षयंति ते वाताम्बुपर्णाशनाः । एवंभूताः विश्वामित्रपराशरभृतयः तेऽपि सुललितं सुन्दरं स्त्रीमुखपंकजं दृष्ट्वैव दर्शनमात्रेणैव मोहं गताः प्राप्ताः । किमुत । यतः शाल्यन्नं तंडुलौदनं तदपि सघृतं पुनः पयोदधियुतं ये मानवा मनुष्याः भुंजते तेषामिन्द्रियनिग्रहः कथं भवेत् । अत्र दृष्टांतः । यदि विंध्याद्रिः सागरं तरेत् । तदाऽपूर्वोऽयमिंद्रियनिग्रहः स्यात् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६५॥

( भा० टी० ) विश्वामित्र, पराशर इत्यादि बड़े बड़े ऋषि जो कि वायु, जल और पत्ते खा पीके रह जाते थे वेभी स्त्रीके कमलरूप मुखको देखके मोहको प्राप्त हुए. तो अब जो मनुष्य अन्न, घी, दूध, दही इत्यादि अच्छे सरस व्यञ्जन भोजन करते हैं, उनकी इंद्रियां जो वशमें हो जायँ तो समुद्रपर विंध्याचलके तैरनेमें क्या आश्चर्य है ? ॥ ६५ ॥

इति दुर्विरक्तप्रशंसा ।

## अथ स्त्रीणां परित्यागप्रशंसा ।

संसारेऽस्मिन्नसारे कुनृपतिभुवनद्वारसेवावलम्ब-
व्यासंगव्यस्तधैर्यं कथममलधियो मानसं संविदध्युः ।
यद्येताः प्रोद्यदिंदुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः
प्रेंखत्काञ्चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः ॥ ६६ ॥

( सं० टी० ) इहास्मिन्संसारे पुरुषास्तरुणस्त्रीदिर्शनेनैव कुनृपतिभवनद्वारसेवाखिन्नांतःकरणाः स्वस्थचित्ता भवंतीत्याह—संसारेति । प्रकर्षेणोद्यदिंदोर्द्युतीनां तेजसां निचयं समुदायं बिभ्रति ताः । प्रेंखन् शब्दायमानः काञ्चीकलापो यासां ताः । स्तनानां कुचानां भरेण विनमन् विनम्रः मध्यभागो यासां ताः । एवंभूताः एताः अम्भोजनेत्रा स्त्रियः तरुण्यो यदि न स्युः न आसन् । तर्हि अमलधियो मानवा अस्मिन् असारे संसारे कुनृपतयः कुत्सिता नृपतयस्तेषां भवनद्वाराणां गृहद्वाराणां सेवालम्बने व्यासंगस्तेन व्यस्तं नष्टप्रायं धैर्यं यस्य तत् एवंभूतं मानसं मनः कथं विदध्युः कुर्युः ? एतस्यायं भावः । यदि स्त्रियो न आसन् तदा बुद्धिमन्तः सेवां न कुर्युः । स्त्रीनिमित्तं राजसेवां कुर्वंति इति व्यासंगेन मनः चंचलमधैर्यं भवति । स्रग्धरा वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६६ ॥

( भा० टी० ) उदित चंद्रमाकीसी कांति धारण करनेवाली, कमल समान नेत्रोंवाली, झूलतीहुई करधनीकी लरियोंवाली और स्तनभारसे झुँकी कटिवाली, यौवनवती स्त्रियां यदि न हों अर्थात् इनके स्नेह न हो तौ इस असार संसारमें निर्मल बुद्धिवाले मनुष्य दुष्ट राजाओंके द्वारकी सेवामें नानाभांतिके कलंकसे अधीरचित्त क्यों करैं ? ॥ ६६ ॥

सिद्धाध्यासितकन्दरे हरवृषस्कन्धावगाढद्रुमे
गङ्गाधौतशिलातले हिमवतः स्थाने स्थिते श्रेयसि ।
यः कुर्वीत शिरःप्रणाममलिनं मानं मनस्वी जनो
यद्यत्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥ ६७ ॥

( सं० टी० ) सिद्धेति । यदि स्मरास्त्रं स्त्रियो न स्युः नासन् तदा हिमवतः

हिमालयस्य स्थाने स्थिते स्थित्वा कः मनस्वी शिरःप्रणाममलिनं मानं कुर्वीत ? कथंभूताः स्त्रियः । अत्रस्ता ये कुरंगशावास्तेषां नयनानीव नयनानि यासां ताः । कथंभूते हिमवतः स्थाने ? सिद्धैः अध्यासिताः अधिष्ठिताः कंदरा गुहा यस्य । हरवृषो नंदी, तेन स्कंधेन अवगाढा अवरुद्धा द्रुमा यस्मिन् । पुनः गंगाधौतानि शिलातलानि यस्मिन् । श्रेयसि पुण्यरूपे । अयं भावः । प्रशस्तं शुद्धं मनो यस्य स मनस्वी जनः यस्य मनः शुद्धं तस्य साधने तस्य अनपेक्षा, यदा मलिनं मनस्तदा मनसः शुद्धयर्थं साधनांतराणि कर्तव्यानि । संप्रति मनो मलिनं स्त्रीभिरेव क्रियते । अतः स्त्रीणां प्रभावा एव उत्पन्ना न स्युः तदा मनोऽपि मलिनं नैव भवेत् । तदा मनस्वी जनः हिमवतः स्थाने गत्वा शिरःप्रणामेन किमर्थं मलिनं करिष्यति । मलिनतायाः कारणं स्त्री एव । स्त्री मदनस्य अस्त्रं यस्यांगं संगच्छति स मूर्च्छितो भवति । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६७ ॥

( भा० टी० ) यदि त्रस्त हरिणशावकनैनी ऐसी कामास्त्ररूप कामिनी घरमें न होती तो सिद्ध लोग जिसकी कंदरामें बैठे हैं और महादेवजीके बैल नंदीश्वर महाराज जहां वृक्षोंमें कंधा रगड़ते हैं और गंगाजलसे जहांके पाषाण धोए जाते हैं ऐसा कल्याणदायक हिमालयका स्थान छोड़कर कौन मनस्वी पुरुष लोगोंके समीप जाकर माथा झुकाय प्रणाम कर अपने मानको मलीन करता ? ॥ ६७ ॥

संसार तव निस्तारपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ ६८ ॥

( सं० टी० ) अस्यां भुवि संसारेच्छुजनेन मदिरेक्षणासेवनमेव कार्यं इत्यभिप्रायेणाह–संसारेति । रे संसार ! यदि अन्तरा त्वन्मध्ये मदिरेक्षणाः स्त्रियो दुस्तराः न स्युस्तदा तव निस्तारपदवी स्थितिः न दवीयसी अतिदीर्घा नैव । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ६८ ॥

( भा० टी० ) हे संसार ! यदि अच्छे नेत्रवाली दुस्तर स्त्रियां तेरे बीचमें न होतीं तो तुझसे पार होना कुछ कठिन न था ! ॥ ६८ ॥

॥ इति स्त्रीणां परित्यागविधिः ॥

# अथ यौवनप्रशंसा ।

राजंस्तृष्णांबुराशेर्नहि जगति गतः कश्चिदेवावसानं
को वाऽर्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागे ।
गच्छामः सद्म तावद्विकसितनयनेंदीवरालोकनानां
यावच्चाक्रम्य रूपं झटिति न जरया लुप्यते प्रेयसीनाम् ॥ ६९ ॥

( सं० टी० ) तृष्णांबुराशेः दुर्जयत्वमाह-राजन्निति । भो राजन् ! इह जगति कश्चिदेव तृष्णाम्बुराशेः तृष्णासमुद्रस्य अवसानं पारं नहि गतः । स्ववपुषि स्वशरीरे यौवने च सानुरागे अतिप्रिये गलिते सति प्रभूतैः पुष्कलैः अर्थैर्द्रव्यैः को वाऽर्थः प्रयोजनम् । तावद्विकसितानि नयनान्येव इंदीवराणि तैः आलोकितुं द्रष्टुं शीलं यासां तासां प्रेयसीनां प्रियाणां सद्म गृहं प्रति इच्छामः । यावत् जरया तासां रूपमाक्रम्य झटिति शीघ्रं न लुप्यते । स्रग्धरा वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६९ ॥

( भा० टी० ) हे महाराज ! इस तृष्णारूपी समुद्रके पार कोई न गया और जब हमारी अनुरागभरी युवाअवस्था देहहीमें जीर्ण हो गई तब अधिक द्रव्यही प्राप्त करके हमे क्या करना है ? शीघ्रही अपने घर क्यों न चले जाँय ? ऐसा न हो कि, विकसितकुमुद और कमल ऐसे नेत्रवाली हमारी प्यारियोंके रूप वृद्धावस्था घुला घुला बिगाड़ न डाले. यहां कुमुद रात्रिविकासी, और कमल दिनविकासीसे अभिप्राय है; इससे यह सूचना होती है कि, वे रातदिन हमारा मार्ग देखती होंगी ॥६९॥

रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतु-
र्मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ।
कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं
लोकेऽस्मिन्न ह्यनर्थं निजकुलदहनं यौवनादन्यदस्ति ॥ ७० ॥

( सं० टी० ) नानाविधदोषास्पदं यौवनमाह-रागेति । अस्मिन् लोके यौवनात्तारुण्यादन्यत् द्वितीयमनर्थमनर्थकरं नहि नास्ति । कथंभूतं यौवनम् ? रागस्य

इच्छाया एकमगारं गृहम् । नरकाणां शतानि तेषु महादुःखानि तेषां संप्राप्तिस्तस्य हेतुः कारणम् । मोहस्योत्पत्तिः तस्या बीजम् । ज्ञानलक्षणस्य ताराधिपस्य चंद्रस्य जलधरपटलं मेघपटलमाच्छादकम् । कन्दर्पो मदनस्तस्य एकं मित्रम् । प्रकटिता विविधा नानाप्रकाराः स्पष्टा दोषास्तेषां प्रबन्धं रचनाम् । निजं स्वकीयं कुलं तस्य दहनं दाहकम् । एवं यौवनं निंद्यमिति भावः । स्रग्धरा वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७० ॥

( भा० टी० ) राग [ इच्छा ] का घर, सैकड़ों नरकोंके दुःख प्राप्त होनेका हेतु, मोहकी उत्पत्तिका बीज, ज्ञानरूपी चन्द्रमाके ढाकनेको मेघोंका समूहरूप, कामदेवका एकही मित्र, अनेक दोषोंको प्रगट करनेवाला और अपने कुलको अंगाररूप ऐसा जो यौवन उसके सिवाय इसलोकमें दूसरा कोईभी अनर्थ नहीं! ॥ ७० ॥

शृङ्गारद्रुमनीरदे प्रचुरतः क्रीडारसस्रोतसि
प्रद्युम्नप्रियबान्धवे चतुरतामुक्ताफलोदन्वति ।
तन्वीनेत्रचकोरपारणविधौ सौभाग्यलक्ष्मीनिधौ
धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने ॥७१॥

( सं० टी० ) एतादृशं नूतनं यौवनं प्राप्य यो विकारं न व्रजति स धन्य इत्याह-शृंगारेति । यः नवे नूतने यौवने तारुण्ये प्राप्ते सति विक्रियां विकारं न कलयति न करोति । एतादृशो यः कोऽपि कश्चिदपि स्यात् स धन्यः पुण्यवान् । कथंभूते यौवने ? शृंगारा एव द्रुमास्तेषां नीरदे । यथा जलप्राप्तौ वृक्षाः शोभन्ते तथा यौवनेन शृंगाराः शोभन्ते । प्रचुरतो बाहुल्येन क्रीडानां रसस्तेषां स्रोतसि स्वतः अम्बुसरणे प्रद्युम्नो मदनस्तस्य प्रिये बान्धवे बन्धौ चतुरतालक्षणानि मुक्ताफलानि तेषामुदन्वति समुद्रे । तन्वी सुन्दरस्त्री तस्या नेत्रे एव चकोरौ तयोः पारणं तस्य विधौ चन्द्रे सौभाग्यलक्ष्मीनिधौ स्थापनापात्रे । शार्दूलविक्रीडितं वृत्तम् । ल० पू० ॥ ७१ ॥

( भा० टी० ) शृङ्गाररूपी वृक्षोंको सींचनहारा मेघ, विस्तरित क्रीडारसका प्रवाह, कामदेवका प्रिय भ्राता, चतुरतारूपी मोतियोंका समुद्र,

स्त्रियोंके नेत्ररूपी चकोरको पूर्णचन्द्ररूप और सौभाग्यलक्ष्मीका एक पात्र ऐसी युवाअवस्थाको पाकर जो पुरुष विकारको नहीं प्राप्त होता सोही धन्य है ॥ ७१ ॥

इति यौवनप्रशंसा।

## अथ कामिनीगर्हणप्रशंसा।

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युत्सुकः
पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति।
दृष्ट्वा माद्यति मोदतेऽतिरमते प्रस्तौति जानन्नपि
प्रत्यक्षाशुचिपुत्तिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ॥ ७२ ॥

(सं० टी०) विद्वान्पुरुषः स्त्रियं दृष्ट्वा मोहितो भवतीत्याह–कान्तेति। पुरुषः स्त्रियं प्रत्यक्षं अशुचीनां पुत्तिकां जानन्नपि उत्सुको विमर्यादो भवति, मोदते च, हर्षं प्राप्नोति, अत्यतिशयेन रमते च इति स्तौति। इतीति कथम्। तस्या अभिधानं गृह्णाति सा कांता सुंदरी उत्पललोचना कमललोचना विपुलो विस्तृतः श्रोणीभरः कटिप्रदेशो यस्याः सा तथाभूता। पीनौ मांसलौ उत्तुंगौ ऊर्ध्वौ पयोधरौ स्तनौ यस्याः सा। सुष्टु मुखाम्भोजं यस्याः सा। इत्येवमभिधानानि गृहीत्वा स्तौति माद्यति च। अहो इति आश्चर्यमिदम्। मोहस्य दुश्चेष्टितं दुर्व्यापारोऽस्ति। एवं विद्वानपि पीनोत्तुङ्गपयोधरां स्त्रियं दृष्ट्वा मोहेन स्त्रीलम्पटो भवतीति भावः। वृत्तं पूर्वोक्तम्। ल० पू० ॥ ७२ ॥

(भा० टी०) वह स्त्री सुंदर है, कमलनैनी है, बड़े नितम्बवाली है पुष्ट और उत्तुंग स्तनवाली है, सुन्दर कमलमुखी और सुन्दर भौंहवाली है, यों कह कह पण्डितलोगभी स्तुति करते हैं और अत्यन्त उत्कण्ठित होते हैं, आनन्द पाते हैं और रमण करते हैं. अहो! प्रत्यक्षही अपवित्रताकी पुतलीरूप स्त्री है, उसपर देखो! यह मोहकी क्या बुरी चेष्टा है? ॥ ७२ ॥

स्मृता भवति तापाय दृष्टा चोन्मादवर्धिनी।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ ७३ ॥

(सं० टी०) स्मृतेति। या स्त्री स्मृता सती तापाय संतापाय भवति।

तथाच दृष्टा उन्मादवर्धनं करोति तच्छीला एवंविधा भवति । तथा स्पृष्टा सती मोहाय भ्रमाय भवति । सा दयिता कथंनामेति संभावना । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ७३ ॥

( भा० टी० ) जो स्मरणसे सन्ताप देती है, देखनेसे उन्माद बढ़ाती अर्थात् मदवाला कर देती है और स्पर्शसे मोहित कर लेती है, ऐसी स्त्रीको प्रिया क्यों कर कह सक्ते हैं ? ॥ ७३ ॥

तावदेवामृतमयी यावल्लोचनगोचरा ।
चक्षुःपथादपगता विषादप्यतिरिच्यते ॥ ७४ ॥

( सं० टी० ) एका स्त्री दर्शनादर्शनप्रकारेण अमृतवत् सुखदा, विषवत् दुःखदा च भवतीत्याह—तावदेवेति । यावत्स्त्री लोचनगोचरा चक्षुःप्रत्यक्षभूता तावदेव अमृतमयी अमृतप्रचुरा भवति । चक्षुःपथान्नेत्रमार्गादपगता रहिता विषादतिरिच्यते अधिका भवति । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ७४ ॥

( भा० टी० ) स्त्री तभीलौं अमृतमय है कि, जबलौं नेत्रके सामने है; नेत्रसे जब दूर हुई, तब विषसेभी अधिक हो जाती है अर्थात् विरहसे सन्ताप देती है ॥ ७४ ॥

नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् ।
सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥ ७५ ॥

( सं० टी० ) नामृतमिति । एकां नितम्बिनीं स्त्रियं मुक्त्वा त्यक्त्वा किंचिदपि अमृतं नास्ति । उतापि विषं नास्ति । किंतु सैव स्त्री रक्ता अनुरक्ता सती अमृतलताऽमृतवल्ली भवति । विरक्ता सती विषवल्लरी विषलता भवति । वृत्तं पूर्वोक्तम् । लक्षणं पूर्वोक्तम् ॥ ७५ ॥

( भा० टी० ) स्त्रियोंसे परे न कोई अमृत है और न विष. यदि वह ( स्त्री ) प्रीति करे तो अमृतलता है और प्रीति तोड़ बैठे तो विषकी मंजरी है ॥ ७५ ॥

आवर्तः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।

स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं
स्त्रीयन्त्रं केन सृष्टं विषममृतमयं प्राणिनां मोहपाशः ॥ ७६ ॥

( सं० टी० ) ब्रह्मणा निर्मितं स्त्रीयन्त्रं निन्दयन्नाह—आवर्त इति । लोके यन्त्राणि संति, तैर्मारणोच्चाटनवशीकरणादिक्रियाः क्रियंते । अतः स्त्रीयन्त्रं केन ब्रह्मणा सृष्टं निर्मितम् । कथंभूतं संशयानां संदेहानामावर्तः सकलसंदेहास्पदीभूतमित्यर्थः । पुनः दोषाणां सन्निधानं सर्वे दोषास्तत्सन्निधाने भवंति । कपटशतमयं कपटशतप्रचुरमित्यर्थः । अप्रत्ययानामगुणानां क्षेत्रम् । स्वर्गद्वारस्य विघ्नो नाशनशीलम् । नरकाणां यत्पुरं नगरं तस्य मुखम् । सर्वासां मायानामलीकानां करंडं स्थापनपात्रम् । एतादृशं स्त्रीयन्त्रं प्राणिनां मोहपाशो भवति । वृत्तं स्रग्धरा । लक्षणं पूर्वोक्तम् ॥ ७६ ॥

( भा० टी० ) संशयोंका भँवर, अविनयका घर, साहसोंका नगर, दोषोंका पात्र, अविश्वास और सैकड़ों कपटोंकरके भराहुआ, अवगुणोंका खेत, स्वर्गद्वारका विघ्नकारक, नरकनगरका द्वार, सब मायाओंका पिटारा, अमृतसे लिपटा विष और प्राणियोंके फँसानेका फंदा ऐसा यह स्त्रीरूपी यंत्र ब्रह्माजीने रचा है ॥ ७६ ॥

सत्यत्वेन शशांक एष वदनीभूतो नवेन्दीवर-
द्वन्द्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता ।
किन्त्वेकं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि
त्वङ्मांसास्थिमयं वपुर्मृगदृशां मंदो जनः सेवते ॥ ७७ ॥

( सं० टी० ) सत्येति । एषः शशांकश्चन्द्रः सत्यत्वेन वदनीभूतो नैव । नच इंदीवरद्वंद्वं नीलोत्पलयुग्मं सत्यत्वेन लोचनतां नेत्रतां गतम् । कनकैः सुवर्णैरपि सत्यत्वेन अंगयष्टिर्न कृता । किंतु एवमुक्तप्रकारेण कविभिः उपमा दत्ता । अतः प्रतारितमनास्तत्त्वतो जानन्नपि यः जनः मृगदृशां त्वङ्मांसास्थिप्रचुरं वपुः शरीरं सेवते । स मन्द इति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७७ ॥

( भा० टी० ) देखो तो सच, कुछ चन्द्रमाही मुख नहीं बन गया,

कमलही दोनों नेत्र नहीं हुए, स्वर्णहीसे देह नहीं बना है, किन्तु यह स्त्रियोंका शरीर चाम, मांस और हाडमय है; यह बात जानकरभी कवियोंके बहँकानेसे अन्धे मन्द अर्थात् विवेकरहित मनुष्य उसे सेवन करते हैं ! ॥ ७७ ॥

लीलावतीनां सहजा विलासा-
स्त एव मूढस्य हृदि स्फुरन्ति ।
रागो नलिन्या हि निसर्गसिद्ध-
स्तत्र भ्रमत्येव मुधा षडङ्घ्रिः ॥ ७८ ॥

( सं० टी० ) विलासवतीनां स्वभावसिद्धान् हावभावान् दृष्ट्वा मूढपुरुषो मोहितो भवतीति भ्रमरदृष्टान्तेनाह–लीलावतीनामिति । लीलावतीनां विलासवतीनां स्त्रीणां सहजाः सहोत्पन्नाः विलासा हावभावाः त एव मूढस्याज्ञस्य हृदि अन्तःकरणे स्फुरन्ति प्रकाशन्ते । अत्र दृष्टान्तः । हि यस्मात् नलिन्या रक्तोत्पलिन्याः रागो लोहितादिर्निसर्गसिद्धः स्वभावसिद्धोऽस्ति । तत्र नलिन्यां षडंघ्रिभ्रमरः मुधा व्यर्थमेव भ्रमति । वृत्तमिन्द्रवज्रा । लक्षणं पूर्वोक्तम् ॥ ७८ ॥

( भा० टी० ) लीलावती स्त्रियोंके जो विलास हैं सो स्वाभाविक हैं. पर सोई मूढोंके हृदयमें बशीकरन हो लगते हैं. जैसे–कमलिनीमें ललाई स्वाभाविकही होती है; परन्तु भ्रमर उसपर व्यर्थही आसक्त होकर घूमता है अर्थात् वह समझता है कि–'मेरेही लिये ललाई चमकाय रही है' ॥ ७८ ॥

यदेतत्पूर्णेन्दुद्युतिहरदुदाराकृति वरं
मुखाब्जं तन्वंग्याः किल वसति तत्राधरमधु ।
इदं तावत्पाकद्रुमफलमिवातीव विरसं
व्यतीतेऽस्मिन् काले विषमिव भविष्यत्यसुखदम् ॥७९॥

( सं०टी० ) अमृतप्रचुरं तन्वङ्गीमुखं परिणामे विषमिव भवतीति पाकफलदृष्टान्तेनाह–यदेतदिति । यत् यस्मात् कारणात् पूर्णेंदुस्तस्य द्युतिस्तेजः तां हर-

१ 'उदाराकृतिधरम्' इति वा पाठः कुत्रचिद्दृश्यते ।

तीति तथाभूतोदारा आकृतिर्यस्य तत् वरं श्रेष्ठम् । एवं तन्वंग्याः कृशाङ्ग्याः स्त्रियः मुखाब्जं मुखकमलम् । तत्र अधरमधु वसतीति किल श्रूयते । तर्हि इदं तावत्पाकद्रुमस्य महाकालद्रुमस्य फलं अस्मिन्काले यौवनेऽतीते अतिक्रमिते सति अतीव विरसं विषमिवासुखदं भविष्यति । यथा पाकद्रुमस्य फलं पक्त्वा कालोपचितं चेत् रसवत् । नोचेत् तत्कालातिक्रमेण तत्र नश्यति विषमिव भवति । तथा तरुण्या मुखमप्यसुखदं सुखदं च भवतीत्यर्थः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७९ ॥

( भा० टी० ) पूर्णमासीके चन्द्रमाकी छबिका हरण करनेवाला सुन्दर आकारवाला और श्रेष्ठ ऐसा जो स्त्रियोंका मुखकमल, उसमें अधरामृत रहता है. मंदारके फलके तुल्य वह मुख अज्ञान वा युवा अवस्थामें अच्छा लगता है. फिर वह काल व्यतीत होनेपर अर्थात् ज्ञान वा वृद्धपन प्राप्त होनेपर विषसा बुरा लगैगा ॥ ७९ ॥

उन्मीलत्त्रिवलीतरङ्गनिलया प्रोत्तुङ्गपीनस्तन-
द्वन्द्वेनोद्यतचक्रवाकमिथुना वक्त्राम्बुजोद्भासिनी ।
कान्ताकारधरा नदीयमभितः क्रूराशया नेष्यते
संसारार्णवमज्जनं यदि ततो दूरेण संत्यज्यताम् ॥ ८० ॥

( सं० टी० ) संसारार्णवमज्जनात्पराभूतेन पुरुषेण नद्याकारा स्त्री त्याज्या इत्याशयेन कान्तां नाम नदीं कृत्वा उभयोः सादृश्यं वर्ण्यते—उन्मीलदिति । उन्मीलत्त्रिवली सा एव तरंगास्तेषां निलयं स्थानं यस्याः सा । प्रकर्षेण उत्तुंगं उच्चं पीनं मांसलं स्तनद्वयं कुचद्वयं तदेव उद्यतं चक्रवाकमिथुनं कोकमिथुनं यस्याः सा । वक्त्रमेवाम्बुजं तेन उद्भासिता शोभायमाना । एवंभूता कान्ताकारधरा नदी इत्थमभितः समंततः क्रूरः आशयः अभिप्रायो यस्याः सा । नदीपक्षे आशयः आवर्तः । हे जनाः ! यदि भवतां संसारार्णवमज्जनं नेष्यते इच्छा नास्ति तर्हि भवद्भिः इयं दूरेण संत्यज्यताम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८० ॥

( भा० टी० ) शोभित पेटकी त्रिवलीही जो तरंगैं तिनका स्थान है, उत्तुंग और पुष्ट हुए दोनों स्तन हैं वेही चक्रवाकोंके जोडे हैं, मुखरूपी

कमलसे शोभित हुए और क्रूर अभिप्रायही जो आवर्त तद्युक्त ऐसी स्त्रीका आकार धारण किये नदी है सो हे पुरुषो ! जो तुम संसारसमुद्रमें न मग्न हुआ चाहो तो इसका दूरहीसे परित्याग करो. इसका यह तात्पर्य है कि, नदीमें गिरी वस्तु घूम फिरके समुद्रमें जा पडती है, इसीप्रकार स्त्रीरत पुरुषभी संसारसमुद्रमें जा पडता है ॥ ८० ॥

जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ ८१ ॥

( सं० टी० ) योषितां प्रियः कोऽपि नास्तीत्याह–जल्पन्तीति । सविभ्रमा विलासादिचेष्टायुक्ताः स्त्रियः अन्येन पुरुषेण सार्धं साकं जल्पन्ति । तथाऽन्यं पश्यन्ति । तथा हृदयेऽन्तःकरणे अन्यं पुरुषं चिन्तयन्ति । तस्मात् योषितां स्त्रीणां प्रियः को नाम । अपितु न कोऽपीत्यर्थः । अनुष्टुप् वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८१ ॥

( भा० टी० ) जो बातें तो किसी अन्य पुरुषसे करती हैं, विलाससहित औरहीकी ओर देखती हैं, और हृदयमें औरहीसे मिलनेकी चाह रखती हैं. फिर कहो ऐसी स्त्रियोंको कौन प्यारा है ? अर्थात् कोई नहीं ॥ ८१ ॥

मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् ।
अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥ ८२ ॥

( सं० टी० ) योषितां सबाह्याभ्यन्तरस्वभाववैलक्षण्यमाह–मध्विति । योषितां स्त्रीणां वाचि वाण्यां मधु तिष्ठति । हृदि अन्तःकरणे केवलं हालाहलमेव विषमेव तिष्ठति । अत एव पुरुषेण तस्या अधरोऽधरोष्ठो निपीयते हृदयं तु मुष्टिभिरेव ताड्यते । वृत्तं वैतालीयम्–" षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः " इति लक्षणम् ॥ ८२ ॥

( भा० टी० ) स्त्रियोंके अधरमें अमृत और छातीमें विष रहता

है, इसीहेतु विषयी लोग अधरका पान करते हैं और छातीमें मुष्टिका प्रहार करते हैं ॥ ८२ ॥

अपसर सखे दूरादस्मात्कटाक्षशिखानलात्
प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः ।
इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधै-
श्चतुरवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ८३ ॥

( सं० टी० ) अपसरेति । हे सखे ! योषित्सर्पात् दूरादपसर गच्छ । कथंभूतात् सर्पात् ? कटाक्षा एव शिखा ज्वालाः तासां अनलः अग्निर्यस्मिन् तस्मात् । पुनः कथंभूतात् ? प्रकृत्या स्वभावेन दैवेन वा विषमात् कुटिलाद्वक्रात् । पुनः विलासा एव फणाः फटास्ता बिभर्ति तस्मात्किमित्युच्यते इतरफणिना सर्पेण दष्टः औषधैश्चिकित्सितुं शक्यन्ते । चतुरवनिताभोगिग्रस्तं मन्त्रिणः हि निश्चयेन त्यजन्ति । अतो दूरादेव अपसर । हरिणीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८३ ॥

( भा० टी० ) हे मित्र ! सहजही क्रूर और बिलासरूपी फणोंको धारण किये, कटाक्षरूपी ज्वालाकी अग्निको धारण किये, ऐसा जो यह स्त्रीरूप सर्प है तिससे दूर भागो; क्योंकि अन्य सर्पोंका डसाहुआ औषधसे अच्छा हो सकता है, पर चतुर स्त्रीरूपी सर्पके डसे हुएको मन्त्रतन्त्रवालेभी छोड भागते हैं ! ॥ ८३ ॥

विस्तारितं मकरकेतनधीवरेण
स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ ।
येनाचिरात्तदधरामिषलोलमर्त्य-
मत्स्यान् विकृष्य पचतीत्यनुरागवह्नौ ॥ ८४ ॥

( सं० टी० ) स्त्रीमोहोऽतिदुर्धर इत्याह-विस्तारितेति । मकरकेतनेन मदनेन धीवरेण कैवर्तकेन अत्रास्मिन् भवाम्बुराशौ भवसमुद्रे स्त्रीसंज्ञितं स्त्रीनामकं बडिशं जालं विस्तारितं प्रसृतम् । किमर्थम् ? येन बडिशेन अचिरात्क्षणात्तस्याः स्त्रियः अधर एव आमिषं तस्मिन् लोलाः सतृष्णा ये मर्त्यमत्स्याः तान् विकृष्य अनुरागः प्रीतिः स एव वह्निः तस्मिन् पचति । वसंततिलकावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८४ ॥

( भा० टी० ) इस संसाररूपी समुद्रमें कामदेवरूपी केवट स्त्रीरूपी बंसीको जाला पसारकर उसमें मनुष्यरूपी मच्छ जो उनके अधरमांसके लोभी हैं उन्हें पकडकर अनुरागरूपी अग्निमें पकाता है ! ॥ ८४ ॥

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा संचर मनःपान्थ तत्रास्ते स्मरतस्करः ॥ ८५ ॥

( सं० टी० ) कामिनीति । हे मनःपान्थ ! कुचावेव पर्वतौ ताभ्यां दुर्गमे गन्तुमशक्ये । कामिन्याः स्त्रियः काय एव कान्तारमरण्यं तस्मिन् मा संचर मा गच्छ । किमर्थम् ? तत्रारण्ये स्मरः काम एव तस्करः चोरः आस्ते । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ८५ ॥

( भा० टी० ) हे मनरूपी पथिक ! कुचरूपी पर्वतोंसे अतिदुर्गम ऐसा जो स्त्रियोंका शरीररूपी वन है उसमें तू मत जा; क्योंकि–'वहां कामदेवरूपी चोर रहता है ! ' ॥ ८५ ॥

व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना
नीलाब्जद्युतिनाऽहिना वरमहं दष्टो न तच्चक्षुषा ।
दष्टे संति चिकित्सका दिशि दिशि प्रायेण धर्मार्थिनो
मुग्धाक्षीक्षणवीक्षितस्य न हि मे वैद्यो न चाप्यौषधम् ॥ ८६ ॥

( सं० टी० ) अहिदष्टजन्यविषापेक्षया स्त्रीकटाक्ष एव परं विषमित्याह– व्यादीर्घेणेति । तच्चक्षुषा तस्याः चक्षुषा अहिना सर्पेण अहं दष्टः न वरं श्रेष्ठमुत्तमम् । कथंभूतेन ? विशेषेण आदीर्घेण । चलेन चञ्चलेन । वक्रगतिना कुटिलगतिना । तेजस्विना कान्तिमता । भोगिना भोगो नाम फणा विद्यते यस्य, चक्षुषः नानाभोगा भवन्ति, नीलाब्जवत् द्युतिर्यस्य तेन । इतरेण अहिना दष्टे दिशि दिशि प्रायशो धर्मार्थिनः चिकित्सकाः सन्ति । परंतु मुग्धाक्षी तस्याः ईक्षणवीक्षितस्य मे वैद्यौ नास्ति औषधमपि नास्ति । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८६ ॥

( भा० टी० ) बड़ा लम्बा, चञ्चल, टेढ़ी चालवाला और तेजस्वी फणधारी, नीलकमलसा और काला सर्प जो मनुष्यको काट ले तो अच्छा;

परंतु स्त्रीके कटाक्षका कटा अच्छा नहीं. क्योंकि साँपके डसेको बचानेवाले धर्मार्थी मनुष्य सब देशोंमें बसते हैं, पर अच्छे नेत्रवाली स्त्रीके दृष्टिसे काटे हुएको न कोई वैद्य है, या न औषध है ! ॥ ८६ ॥

इह हि मधुरगीतं नृत्यमेतद्रसोऽयं
स्फुरति परिमलोऽसौ स्पर्श एष स्तनानाम् ।
इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणो
ह्यहितकरणदक्षैः पञ्चभिर्वञ्चितोऽस्मि ॥ ८७ ॥

( सं० टी० ) इहेति । इह लोके मधुरगीतं कर्णयोर्विषयः । एतन्नृत्यं चक्षुषो- विषयः । अयं रसः रसानायाः विषयः । असौ परिमलः स्फुरति घ्राणस्य विषयः । एषः स्तनानां स्पर्शः स्पर्शस्य विषयः । इति पञ्चेन्द्रियाणां पञ्च- विषयाः । हे जन ! त्वमेभिः पञ्चभिरिन्द्रियैः भ्राम्यमाणः सन् वंचितोऽसि । कथंभूतैरिन्द्रियैः ? हतः नाशितः परमार्थो यैः । पुनः अहितं नरकादिकं तस्य करणे दक्षैः । मालिनी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८७ ॥

( भा० टी० ) यह कैसा सुन्दर मधुर गीत है ? नृत्य ( नाच ) देखो कैसा अच्छा है ? इस वस्तुका रस कैसा स्वादिष्ठ है ? इस वस्तुकी कैसी अच्छी सुगंध है ? स्तन स्पर्शसे क्या अच्छा सुख देते हैं ? इस भांति पांचों विषयोंमें भ्रमता हुआ मैं परमार्थके नाशक और नरकादिके साधन उन पांचों इन्द्रियोंकरके ठगाया हूं ॥ ८७ ॥

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः ।
भ्रमावेशादङ्गे किमपि विदधद्भव्यमसमं
स्मरोऽपस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ ८८ ॥

( सं० टी० ) स्मरस्यापस्माररूपेण दुर्जयत्वमाह—न गम्य इति । अयं स्मरः मदनः अपस्मारो वर्तते । अपस्मारनिवारणार्थमुपायाः संति ते कर्तव्या इति चेत्तर्हि अयं तथा न भवति । अयं कथंभूतः ? मन्त्राणां न गम्यः । भैषज्य- विषयः न भवति । पुनः विविधैरनेकप्रकारैः शान्तिकशतैः न चापि प्रध्वंसं

व्रजति नाशं न प्राप्नोति । अथ च भ्रमस्य आवेशात् अंगे किमपि भव्यं कर्तव्यमसमं विदधत् यत्किंचित्करोति । दृशं दृष्टिं भ्रमयति घूर्णयति च । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८८ ॥

( भा० टी० ) यह कामदेवरूपी अपस्मार रोग भ्रमके आवेशसे अंगमें दुःखदायी कोई कर्म करताहुआ मनको भ्रमाता है और नेत्रोंको घुमाता है. इस रोगमें मंत्रोंकी गति नहीं चलती व औषधीभी नहीं काम करती! अनेक प्रकारकी शांति अर्थात् पाठ पूजादिसेभी इसका नाश नहीं होता!! ॥ ८८ ॥

जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च ।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ८९ ॥ ?

( सं० टी० ) जात्यन्धायेति । पण्यस्त्रीषु वेश्यासु कः रज्येत इच्छां करोति ? । कथंभूतासु ? जात्यंधाय च दुर्मुखाय च जरया जीर्णानि अखिलानि अंगानि यस्य तस्मै, ग्रामीणाय अचतुराय, दुष्कुलं नीचकुलं तत्र उत्पन्नाय, च गलत्कुष्ठेन अभिभूताय पीडिताय, एवमादये लक्ष्मीलवश्रद्धया अल्पद्रव्यप्राप्त्यर्थं मनोहरं सुन्दरं निजं स्वकीयं वपुः शरीरं प्रयच्छन्तीषु । पुनः कथंभूतासु ? विवेक एव कल्पलतिका कल्पवल्ली तस्याः शस्त्रीषु शस्त्रभूतासु छेत्रीषु। शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८९ ॥

( भा० टी० ) जन्मांध, कुरूप, वृद्धपनसे शिथिलांग, गँवार, नीचजाति और टपकते हुए कोढ़से भरेहुए पुरुषोंकोभी अपना सुंदर देह थोड़े धनकी आशासे समर्पण करती हैं और जो विवेकरूपी कल्पलताको छुरीसी हैं ऐसी वेश्याओंसे कौन बुद्धिमान् रमै? ॥ ८९ ॥

वेश्याऽसौ मदनज्वाला रूपेन्धनसमेधिता ।
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ ९० ॥

( सं० टी० ) वेश्येति । यत्र कामिभिः पुरुषैः यौवनानि तारुण्यानि धनानि द्रव्याणि च हूयन्ते, असौ प्रसिद्धा वेश्या रूपमेवेन्धनं काष्ठं तेन समेधिता

वर्धिता मदनज्वाला कामाग्निज्वाला अस्ति । एवं च तारुण्यधनहारिणी वेश्या पुरुषैर्न सेव्या इति भावः ॥ ९० ॥

( भा० टी० ) वेश्या तो रूपरूपी इंधनसे प्रचण्ड हुई कामाग्निकी ज्वाला है; कामी पुरुष उसीमें अपने धन और यौवनका होम करते हैं ! ॥ ९० ॥

कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि ।
चारभटचोरचेटकनटविटनिष्ठीवनशरावम् ॥ ९१ ॥

( सं० टी० ) क इति । कुलपुरुषः सन् को वा मनोज्ञं सुन्दरमपि वेश्याधरपल्लवं चुम्बति ? । अकुलीनः चुम्बति । कुलपुरुषस्तु नैव । किमिति ? कथंभूतं वेश्याधरपल्लवम् । चारो हेरः, भटः भाटः, चोरश्चौरः, चेटकं करोति स चेटकः, नटः नर्तकः, विटः भाण्डः, इत्यादीनां निष्ठीवनस्य लालोदकस्य शरावपात्रं एवं निंद्यम् । कुलहानिकरं वेश्याधरसेवनं कुलिनेन न कर्तव्यमिति भावः । आर्यावृत्तम् । ल० पू० ॥ ९१ ॥

( भा० टी० ) वेश्याका अधरपल्लव यदि सुन्दर है, तौभी उसे कौन कुलीन पुरुष चुंबता है ? क्योंकि वह तो दूत, नीच, दास, चोर, नट और जारोंके थूकनेका ठीकरा है ! ॥ ९१ ॥

इति कामिनीनिगर्हणम् ।

---

## अथ सुविरक्तप्रशंसा ।

धन्यास्त एव तरलायतलोचनानां
तारुण्यरूपघनपीनपयोधराणाम् ।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाऽऽकृतिं विकृतिमेति मनो न येषाम् ॥ ९२ ॥

( सं० टी० ) अस्यां भुवि ये स्त्रियं दृष्ट्वा निर्विकारमनसस्ते त्वतिधन्या इत्याह–धन्या इति । त एव धन्याः पुण्यवन्तः, येषां मनः चपलानि आयतानि विस्तीर्णानि लोचनानि यासां तासां आकृतिं रूपं दृष्ट्वा विकृतिं विकारं न एति । कथंभूतानाम् ? तारुण्यं रूपं घनौ पीनौ च पयोधरौ यासाम् । पुनः क्षामं कृशमुदरं तस्योपरि लसन्त्यः शोभायमानाः त्रिवलयो यासाम् । एतादृशाः

स्त्रियो दर्शनमात्रादेव मनोविकृतिमुत्पादयन्तीति भावः । मालिनीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९२ ॥

( भा० टी० ) चंचल व बड़े नेत्रोंवाली, यौवनके अभिमानमें भरीं, दृढ और पुष्ट स्तनोंवाली, तथा जिनके कृशोदरपर त्रिवलीलता शोभती है ऐसी स्त्रियोंकी आकृति देखकर जिन पुरुषोंके मनमें विकार नहीं उत्पन्न होता, वेही धन्य हैं ॥ ९२ ॥

अजितात्मसु संबद्धः समाधिकृतचापलः ॥
भुजङ्गकुटिलः स्तब्धो भ्रूविक्षेपः खलायते ॥ ९३ ॥

( सं० टी० ) अजितात्मस्विति । स्त्रिया भ्रूविक्षेपः कटाक्षचालनं खलायते खल इवाचरति । कीदृशो भ्रूविक्षेपः खलश्च ? न जितः आत्मा चित्तं यैस्तेष्वजितेन्द्रियेषु संबद्धः । तथा समाधौ चित्तैकाग्र्ये, पक्षे सम्यगाधौ मनःपीडायां विषये, कृतं चापलं येन सः । तथा भुजङ्गो जारस्तद्वत्, पक्षे भुजङ्गवत्सर्पवत्कुटिलः । तथा स्तब्धः स्थिरः, पक्षे गर्विष्ठः । एवंविधः । अनुष्टुप् वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९३ ॥

( भा० टी० ) स्त्रीका कटाक्ष खलवत् आचरण करता है. कैसा है कटाक्ष तथा खल ? कि अजितेन्द्रिय पुरुषोंमें है सम्बन्ध जिसका तथा समाधि ( चित्तैकाग्रता अथवा मानसिक पीडा ) में अत्यन्त चञ्चलता करनेवाला, तथा भुजङ्ग ( जार अथवा सर्प ) के समान टेढ़ा और स्थिर अथवा गर्विष्ठ है ॥ ९३ ॥

मत्तेभकुम्भपरिणाहिनि कुंकुमार्द्रे
कान्तापयोधरतटे रसखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ ९४ ॥

( सं० टी० ) यस्तरुणीभुजालिङ्गितः सन् रात्रौ शेते स धन्य इत्याह-मत्तेभेति । यः पुरुषः रसः शृङ्गारादिस्तत्सेवनजन्यो यः खेदस्तेन खिन्नः श्रान्तः सन् मत्तो मदोन्मत्तो य इभो गजस्तस्य कुम्भो गण्डस्थलं तद्वत्परिणाहिनि विस्तीर्णे, कुंकुमेनार्द्रे, कान्तायाः पयोधरतटे स्तनतटे वक्ष उरो

निधाय अर्थात्स्त्रिया भुजावेव पञ्जरस्तन्मध्यवर्ती सन् क्षणं क्षणमात्रं लब्धा निद्रा येन एतादृशः सन् क्षपां रात्रिं क्षपयति नयति स धन्यः । अस्मिन्संसारे स्त्रयालिङ्गनपूर्वकं शयनमेवात्यन्तसुखहेतुरिति भावः । वसन्ततिलका वृत्तम् ॥ ९४ ॥

( भा० टी० ) जो पुरुष शृंगारादिकके सेवनश्रमसे खिन्न होकर मतवाले हाथीके कुंभसमान विस्तारवाले, तथा कुंकुमकरके भीने हुए स्त्रीके स्तनतटपर छातीको धरके स्त्रीके भुजरूपी पिंजरके मध्य स्थित होकर तथा क्षणमात्रभी निद्राको प्राप्त होकर रात्रिको व्यतीत करता है, वही धन्य है ॥ ९४ ॥

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्मणि ।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥९५॥

( सं० टी० ) शुभ्रमिति । शुभ्रं स्वच्छं सद्म गृहम् । सविभ्रमाः सविलासा युवतयस्तरुण्यः । श्वेतमातपत्रं छत्रं तद्वदुज्ज्वला लक्ष्मीः इति स्फीते पुष्कले शुभे मंगले कर्मणि सति स्थिरमिव अनुभूयते । तदेव विच्छिन्ने जाते सति नितरामत्यन्तमनंगस्य मदनस्य कलहेन या क्रीडा तस्यां त्रुटत्तंतुकं गच्छति । मुक्ताजालं झटिति शीघ्रं भ्रश्यत् दिशाः भ्रश्यदेकैकं चतुर्दिशासु प्रयाति । तद्वत् पूर्वो दृश्यतां पश्यताम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९५ ॥

( भा० टी० ) उज्वल घर, अच्छे हावभावयुक्त स्त्रियां और श्वेत छत्रसहित शोभायमान लक्ष्मी ये तबही स्थिरतासे भोगमें आती हैं; जब पुण्यकी वृद्धि हो. और जब पुण्यका क्षय हो जाता है तब देखो कामदेवकी क्रीडाके कलहसे टूटे हुए हारके मोतियोंकी नाईं भ्रष्ट हो सब भोग शीघ्रही देशांतरोंमें लुप्त हो जाते हैं! ॥ ९५ ॥

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधुवनमनास्वादितरसम् ।

अखण्डं पुण्यानां फलमिव भवद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यत इति ॥ ९६ ॥

( सं० टी० ) निरतिशयरूपवतीं स्त्रियं दृष्ट्वा मोहितस्य तामलभमानस्य कस्यचित्पुरुषस्य तद्दौर्लभ्यसूचिकामुक्तिमाह– अनाघ्रातमिति । न आघ्रातं घ्राणविषयीकृतं पुष्पं कुसुमम्, न केनाप्यास्वादितमित्यर्थः । कररुहैर्नखैरलूनमच्छिन्नं किसलयं पल्लवः केनाप्यस्पृष्टम्, अम्लानमित्यर्थः । " पल्लवोऽस्त्री किसलयम् " इत्यमरः । अनाविद्धं वेधरहितं रत्नम्, तेजसा किंचिदपि न हीनमित्यर्थः । न आस्वादितो रसो यस्य तत् मधुवनं मधुररसवनम्, न केनाप्युपभुक्तमित्यर्थः । पुण्यानामखण्डं फलमिव अनघं दोषरहितं भवत्या रूपम् । " सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः " इह संसारे कं भोक्तारं उपस्थास्यते संगमिष्यते मित्रीकरिष्यते वा इत्यहं न जाने । " उपाद्देवपूजा० " इत्यादिना संगतिकरणे मित्रीकरणे वा आत्मनेपदम् । एतस्य रूपस्य को वा भोक्ता भविष्यतीति नाहं जाने इत्यर्थः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९६ ॥

( भा० टी० ) नासिकाकरके नहीं सूंघा हुआ फूल, नखोंसे नहीं स्पर्श किया हुआ कोमल पल्लव, नहीं बेधाहुआ रत्न, और अनास्वादित रसवाला मधुवन, इनके समान तथा सम्पूर्ण पुण्योंके फलतुल्य निष्पाप जो यह तुम्हारा रूप सो न जानैं किस भोक्ता पुरुषके साथ समागम करैगा ? ॥ ९६ ॥

सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन ।
अनङ्गसञ्जीवनदृष्टिशक्तिर्मुखामृतं ते पिबतीव चन्द्रः ॥ ९७ ॥

( सं० टी० ) प्रियाया नासाग्रमौक्तिकं चन्द्रत्वेनोत्प्रेक्ष्य वर्णयति—सुधामय इति । हे नायिके ! सुधामयोऽमृतमयः अत एव अनङ्गस्य कामस्य संजीवने दृष्टिशक्तिर्दृष्टिसामर्थ्यं यस्य सः । कामोद्दीपक इत्यर्थः । एवंविधोऽपि चन्द्रः क्षयरोगस्य शान्त्यै शमाय नासाया नासिकाया यदग्रं तत्संबन्धि यन्मुक्ताफलकं तस्य छलेन मिषेण ते मुखामृतं पिबतीवेत्यहं मन्य इति शेषः । उपजातिर्वृत्तम् ॥ ९७ ॥

( भा० टी० ) हे सुन्दरि ! अमृतमय अतएव कामदेवको चैतन्य

करनेमें है दृष्टिसामर्थ्य जिसकी ऐसा चन्द्रमा नकमोतीके व्याजसे क्षयरोगसे छूट जानेके लिये तेरे अधरामृतका पान करता है! ॥ ९७ ॥

दिश वनहरिणीभ्यो वंशकाण्डच्छवीनां
कवलमुपलकोटिच्छिन्नमूलं कुशानाम् ।
शुकयुवतिकपोलापाण्डुताम्बूलवल्ली-
दलमरुणनखाग्रैः पाटितं वा वधूभ्यः ॥ ९८ ॥

( सं० टी० ) दिशेति । हे जन ! त्वं वने अरण्ये या हरिण्यो मृग्यस्ताभ्यः वंशस्य वेणोः काण्डो दण्डः " काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु " इत्यमरः । तस्येव छविः कान्तिर्येषां तेषां कुशानां दर्भाणाम् । " अस्त्री कुशं कुथो दर्भः " इत्यमरः । उपलस्य पाषाणस्य कोटिरग्रभागस्तेन छिन्नं मूलं यस्यैवंविधं कवलं ग्रासम् । " ग्रासस्तु कवलः पुनान् " इत्यमरः । दिश देहि । वा अथवा वधूभ्यः स्त्रीभ्यः अरुणानि कृष्णलोहितानि " अरुणः कृष्णलोहितः " इत्यमरमाला । ईषद्रक्तानीति यावत् । यानि नखानि तेषामग्राणि तैः पाटितं छिन्नम्, एवंविधं शुकयुवत्याः कीरस्त्रियाः " गृध्रौ कीरशुकौ समौ " इत्यमरः । कपोलो गण्डस्तद्वत् आ ईषत् पाण्डुः पीतमिश्रश्वेतवर्णा, " पाण्डुस्तु पीतभागार्धः केतकीधूलिसंनिभः " इति शब्दार्णवः । या ताम्बूलवल्ली तस्या दलं पर्णं दिशेत्यर्थः । मालिनीवृत्तम् ॥ ९८ ॥

( भा० टी० ) हे मनुष्यो ! तुम या तौ बनमृगियोंको बांसके दण्डके समान छबिवाले कुशोंके प्रस्तराग्रभागकरके कटीहुई जड़वाले कवल दो अथवा उत्तम स्त्रियोंके अर्थ अरुणारे नखोंकी कोटिकरके तोडेहुए व शुकीके गालके समान थोडेसे पांडुवर्णवाले ताम्बूलदल (पान)-को दो ॥ ९८ ॥

वैराग्ये संचरत्येको नीतौ भ्रमति चापरः ।
शृङ्गारे रमते कश्चिद्भुवि भेदाः परस्परम् ॥ ९९ ॥

( सं० टी० ) वैराग्येति । वैराग्ये एकः पुरुषः संचरति । चापरोऽन्यः नीतौ भ्रमति भ्रमणं करोति । कश्चित्पुरुषः शृंगारे रमते । एवं भुवि भूमौ पुरुषाः । परस्परं भेदविशिष्टा इत्यर्थः । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ९९ ॥

( भा० टी० ) कोई पुरुष वैराग्यमें संचार करता है; कोई नीतिमें प्रवृत्त रहता है और कोई श्रृंगारमें रमता है. यों परस्पर मनुष्योंमें इच्छाका भेद है. अर्थात् भर्तृहरिजीका तात्पर्य यह है कि, तीनों प्रकारके मनुष्योंके हेतु तीनोंभी शतक हमने निर्माण किये हैं ॥ ९९ ॥

यद्यस्य नास्ति रुचिरं तस्मिंस्तस्याऽस्पृहा मनोज्ञेऽपि ।
रमणीयेऽपि सुधांशौ न मनःकामः सरोजिन्याः ॥ १०० ॥

( सं० टी० ) यदिति । यस्य यत् रुचिरं नास्ति तत्र मनोज्ञेऽपि सुन्दरेऽप्यस्य स्पृहा न भवति । अत्र दृष्टान्तः । चंद्रस्तु सर्वेषां प्रियकरः रमणीयः, तस्मिन् सूर्यविकासिन्याः सरोजिन्याः मनसः कामः प्रीतिर्नैव भवति । एवं यस्य यत्र प्रीतिस्तस्य तत् रुचिकरम् । अतो नीतिः श्रृंगारश्च वैराग्यं च उक्तम् । एतेषु यत्र यस्य प्रीतिस्तेन तत् द्रष्टव्यम् । इदं श्रृंगारशतकं भर्तृहरिणा कृतं तत् कामबुद्ध्या न कृतम् । आदावेव आरंभे " समस्तभावैः खलु बंधनं स्त्रियः " इत्युक्तम् । मध्येऽपि " दुःखैकहेतुर्नहि कश्चिदस्ति " इत्यादीनि वचनानि स्थले स्थले स्थितानि । तासां कामिनीनां प्रशंसा कामिभिः क्रियते । सा लिखिता । प्रान्ते सर्वं विवेकदृष्ट्या निन्दितम् । वृत्तमार्या । लक्षणं पूर्वोक्तम् ॥ १०० ॥

( भा० टी० ) जो जिसको प्रिय नहीं सो सुंदर क्यों न हो परंतु उसकी इच्छा वह नहीं करता. जैसे, चन्द्रमा सबको प्रिय है; तथापि उसपर सूर्यविकासिनी कमलिनियोंके मनकी प्रीति नहीं होती. अतएव जिसपर जिसकी प्रीति उत्पन्न होती है वही उत्तम है. अतः नीति, शृंगार, और वैराग्य ये तीन शतक कहे हैं; इनमेंसे जिसपर जिसकी रुचि हो सो उसीको देखे ॥ १०० ॥

॥ इति श्रृंगारशतकं समाप्तम् ॥

श्रीः ।

# भर्तृहरिविरचितं

# वैराग्यशतकं प्रारभ्यते ।

चूडोत्तंसितचारुचंद्रकलिकाचञ्चच्छिखाभास्वरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।
अन्तः स्फूर्जदपारमोहतिमिरप्राग्भारमुच्चाटयन्
चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥ १ ॥

( सं० टी० ) विश्वेशं मोक्षदातारं भैरवं भीतिनाशनम् । बुद्धिप्रदं बुद्धिराजं सर्वांगैर्नौमि सादरम् ॥ १ ॥ लंबोदरमुखं ध्यात्वा नत्वा कृष्णं सदाशिवम् । वैराग्यशतकव्याख्यां यथाप्रज्ञं करोम्यहम् ॥ १ ॥ इह खलु सकलवसुधेशशिखामणी राजर्षिप्रवरः श्रीमान् भर्तृहरिर्वैराग्यशतकमेवारंभमाणः स्वेष्टदेवं सदाशिवं विशेषयन्नमति—चूडोत्तंसेति । चूडायां केशपाशे उत्तंसिता भूषणभूता चारु रमणीया या चंद्रकलिका चंद्रकला तस्याः चञ्चंत्यो देदीप्यमाना याः शिखाः किरणास्तैर्भास्वरः शोभायमानः । ' घृणिज्वाले अपि शिखे ' इत्यमरः । लीलया दग्धो विलोलश्चञ्चलः कामशलभः मदनपतङ्गो येन सः । श्रेयः कल्याणं तस्य दशा अवस्था तदर्थं अग्रे स्फुरन्प्रकाशमानः, लोकानां कल्याणं कर्तुं प्रकटीभूत इति भावः । अंतरभ्यंतरे स्फूर्जत्प्रकाशमानोऽपारः पाररहितो यो मोहः स एव तिमिरमन्धकारः अज्ञानं यावत्तस्य प्राग्भारोऽतिशयस्तमुच्चाटयन्समूलं नाशयन् । एवंविधो भक्तांतःकरणे ज्ञानं प्रदीपयति प्रकाशयतीति ज्ञानप्रदीपः । हरः शिवः योगिनां चेत एव सद्म गृहं तस्मिन्विजयते सर्वोत्कर्षेण वर्तते । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १ ॥

( भा० टी० ) परमश्रेष्ठ राजर्षि भर्तृहरिजी वैराग्यशतकके प्रारंभमें अपने इष्टदेव सदाशिवको विशेषकरके नमन करते हैं-कैसे हैं वे सदाशिवजी कि जिनकी जटामें चंचल और देदीप्यमान चंद्रकला विराजमान है और लीलाहीसे जिन्होंने कामदेवरूपी पतंगको भस्म किया है, सो आगे कल्याणकी स्फूर्ति करते, पूर्वमें भएहुए अपार मोहरूपी तिमिरको उच्चाटन करते, योगीजनोंके हृदयमें सर्वोत्कृष्टतासे प्रदीपरूप विराजमान हैं ॥ १ ॥

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ॥
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ २ ॥

( सं० टी० ) वेत्ता मात्सर्यसंयुक्तः प्रभुर्गर्वेण दूषितः ॥ भाषितं सकलं लीनं देह एव तु नो बहिः ॥ १ ॥ महतां गुणान् महत्स्वेव लीनानालोक्य शोचयन्नाह-बोद्धार इति । बोद्धारः सदसद्विवेककर्तारोऽहमेव बहुज्ञोऽल्पज्ञं किमन्यं पृच्छेयमन्यस्मिन्नल्पज्ञत्वदोषदर्शनरूपेण मात्सर्येण ग्रस्ताः सर्पेण भेका इव निगीर्णाः । प्रभवः सर्वगुणग्रहणसमर्थाः मां धनादिसम्पन्नमालोक्य सर्व एवायान्तीति स्मयेन गर्वेण दूषिताः दुष्टान्तःकरणा अन्ये तदतिरिक्ताः अबोधेनाज्ञानेनापहताः हतप्रायाः । अतः सर्वं सुभाषितमङ्ग एव जीर्णं लीनम्, न बहिरन्येषु प्रसारितामिति भावः । अनुष्टुप् वृत्तम् । लक्षणं पूर्वोक्तम् ॥ २ ॥

( भा० टी० ) विद्वान् लोग तो अपने मत्सरहीसे ग्रसित हैं और धनवान् लोग अपने द्रव्यके गर्वसे किसीके गुणोंका आदरही नहीं करते; और जो हैं सो साधारण अल्पज्ञ हैं. इन कारणोंसे सुभाषित उत्तम काव्य शरीरहीमें जीर्ण होता जाता है अर्थात् कदापि बाहरमें प्रगट नहीं होता है ॥ २ ॥

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ३ ॥

( सं० टी० ) संसारजनितं वृत्तं सुखदं न कदाचन । सुखरूपं भजेत्कृष्णं यदीच्छेन्मुक्तिमात्मनः ॥ १ ॥ संसारे उत्पन्नं चरितं सुखरूपं न भवतीति तत्र लुब्धान् जनान् शिक्षयन्नाह-नेति । संसारः संसरणरूपो जगदनेकव्यापारस्तत्र भवमनेकचरितं जनकृतं नानाकर्तव्यरूपं कुशलं दृढसुखरूपं न पश्यामि । चलानां पदार्थानां फलमपि चलमेव भवतीति भावः । ननु स्वर्गादिजनकाश्वमेधादियागपुण्यानां सुखमयः स्वर्गवासः फलं श्रुतमेव, कथं तेषां विपाके स्वभयजनकत्वं तत्राह-विपाक इति । पुण्यानामपि कर्मणां विपाकः फलं मे मम विमृशतो विचारयतो भयं जनयाति । तत्र कारणमाह । महद्भिः पुण्यौघैः पुण्यसमूहैः चिरकालेन परिगृहीताः सम्यग्धृताः विषया महान्तोऽपि स्वरूपतः फलदानतो विषयिणां रागिणां व्यसनं दुःखमेव जनयितुमुत्पादयितुं जायन्ते उत्पद्यन्ते इति । " क्षीणे पुण्ये मर्त्यलोकं विशन्ति " इति भगवद्वचनाच्च । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३ ॥

( भा० टी० ) संसारमें उत्पन्न चरित्रोंको हम कुशल नहीं देखते और पुण्यफल स्वर्गादि विचारसे भयदायकही देख पडता है, अर्थात् पुण्यक्षय होनेपर वहांसेभी पतन होता है और बहुत दिनपर्यन्त पुण्यके समूहसे इस लोकमें जो विषयादि संचित किये हैं वेभी विषयासक्तोंको अन्तसमय दुःखदायकही हैं ॥ ३ ॥

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ॥
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥४॥

( सं० टी० ) निखनेद्वसुधां धातुगिरेर्धातुं सदौषधैः ॥ निस्तरेदुदधिं यद्वा तृष्णाशान्तिस्तु कृष्णतः ॥ १ ॥ वसुधादिखननक्रियाश्रान्तस्तत्क्रियालभ्यवस्त्विच्छानिवृत्तये तृष्णामेव प्रार्थयति-उत्खातमिति । गृहे निधिस्तिष्ठति न वेति शङ्कया क्षितेस्तलपर्यन्तमुत्खातं खनितम्, निधिलाभतृष्णयेत्यर्थः । गिरिधातवो हरितालादयो ध्माताः अनेकौषधयोगेनाग्नौ तापिताः, कनकादिलाभार्थमित्यर्थः । सरितां पतिः समुद्रोऽपि परतो रत्नादिलाभेच्छयान्तः प्रवेशतो

वा निस्तीर्णः सीमालङ्घितः, रत्नादीच्छयेत्यर्थः । नृपतयो राजानोऽप्यनेकयत्नैरुपायैस्तोषिताः तुष्टिं प्रापिताः । मन्त्राराधने वशीकरणे तत्परेण संलीनेन मनसा श्मशाने शवसमीपे निशाः रात्रयो नीता अतिक्रमिताः । एतासु क्रियासु काणवराटकोऽपि कपर्दिकापि नैव संप्राप्ता लब्धा, अतो मां हे तृष्णेऽधुनैव शीघ्रं मुञ्च त्यजेति प्रार्थना । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

( भा० टी० ) द्रव्य मिलनेकी आशासे मैंने ठौर ठौर भूमि खोदी, रसायन सिद्ध होनेके निमित्त पर्वतकी अनेक धातुएँ फूंक डालीं, देशान्तरसे धनप्राप्तिके हेतु अथवा रत्नादि लाभके हेतु समुद्रकेभी पार चले गये, और बडे प्रयत्नसे राजाओंकोभी प्रसन्न किया और मंत्र सिद्ध करनेके निमित्त मन लगाकर निरंतर रातोंको महाश्मशानमें बैठे जगाया किया, परन्तु यथार्थ मुझे एक कानी कौडीभी हाथ न आई. इससे हे तृष्णे ! अब तो मेरा पिण्ड छोड ॥ ४ ॥

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित् फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहे साशङ्कया काकवत्
तृष्णे दुर्मतिपापकर्मनिरते नाद्यापि संतुष्यसि ॥ ५ ॥

( सं० टी० ) लोभादनेकदेशेषु मनो भ्रमसि लोलुप । कृष्णस्मरणसंदेशं सम्भ्रमश्रमहारिणम् ॥ १ ॥ परदेशादिगमनानेकसेवादिकरणसंतप्तः सन् तृष्णामेव निंदति-भ्रान्तमिति । अनेकं बहुप्रकारं दुर्गं गन्तुमशक्यं पर्वताटव्यादिना एवंभूतं देशं प्रति भ्रान्तं चलितम् । फलं तु किंचिदल्पमपि एकमपि वा न प्राप्तं नैव लब्धम् । किं बहु बहुप्रकारं वा । ननु देशगमनागमनमात्रं कृत्वा फलं तु कस्यचित् सेवां विना नैव भवतीत्याशंक्याह-त्यक्त्वेति । जातिर्ब्रह्मक्षात्रादिः, कुलं सत्कर्मादिनोत्पन्नं तत्रोचितमभिमानं नीचकर्माकरणरूपं त्यक्त्वा सेवापि कृता सापि निष्फला फलशून्या । माननिमन्त्रणादिपूर्वकमाह्वानं सत्कारस्तद्रहितं यथा स्यात्तथा भुक्तम् । परगृहे आशङ्कया सहवर्तमानया तया बुद्ध्या भीत्या वेति शेषः । हे

तृष्णे ! दुर्मत्या पापरूपं कर्म तत्र निरते निमग्ने अद्यापि पापं कर्म कारयित्वापि न संतुष्यसि । अपरं किं कारयसीति भावः । वृत्तं पूर्वोक्तम् । लक्षणं पूर्वोक्तम् ॥ ५ ॥

( भा० टी० ) दुर्गम्य अनेक देशोंमें मैंने भ्रमण किया, पर कुछ फल न प्राप्त हुआ; यथार्थ जाति और कुलका अभिमान त्यागकर पराई सेवा की, सोभी व्यर्थ हुई; अपमानसे कौवेकी नाईं सशंकित होकर पराये घरमें भोजनभी करता रहा; परंतु हे तृष्णा! दुर्मतिद्वारा पापकर्ममें प्रवृत्ति करनेवाली तू अबतक संतोष नहीं पकडती ॥ ५ ॥

खलोल्लापाः सोढाः कथमपि तदाराधनपरै-
र्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतश्चित्तस्तम्भः प्रहसितधियामञ्जलिरपि
त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् ॥ ६ ॥

( सं० टी० ) खलवाग्बाणविद्धोऽपि न तत्सेवारतो भवेत् ॥ कृष्णसेवारतो ना स्यादत्रानन्दो निराश्रयः ॥ १ ॥ तृष्णाऽतिगुर्वी अतः प्रथमं तत्रानेकदुःखानि प्रदर्श्याशायामपि तानि दर्शयितुमाशां प्रार्थयते–खलेति । खलानां प्रतिक्षणे परच्छिद्रनिरीक्षकाणामालापाः नीचसंबुद्धयो रे दीन मन्द इत्यादिका उच्चैराह्वानरूपाः सोढा अङ्गीकृताः । कथमपि केनापि प्रकारेण तदाराधनपरैः तेषां खलानामाज्ञायां संलग्नैरस्माभिरिति शेषः । तेषां कटुवचनैरुत्थितमन्तर्बाष्पं श्वासस्तं निरुध्य इत्यर्थः । मां दीनमन्यं वा दृष्ट्वा प्रहसिता धीर्येषां तेषामपि चित्तस्तम्भस्तद्धारणमञ्जलिः प्रणामश्च कृतः शून्येन साररहितेन मनसा । तथापि हे आशे मोघा निष्फला आशा इच्छा दिक् इति वा यस्याः सा त्वं किमपरं एतत्सर्वं कारयित्वापि खलानां पुरः मां नर्तयसि नर्तनं कारयसीति भावः । शिखरिणीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६ ॥

( भा० टी० ) खलोंकी सेवा करनेमें हमने उनके कडे और कुतर्कवाक्य सहे; हृदयमें नेत्रोंके आंसुवोंको रोक उनके आगे हँसा किए और चित्त स्थिर कर उन हँसनेवालोंके सन्मुख हाथभी जोडे

हे व्यर्थ आशा करनेवाली तृष्णा! हमे इससे अधिक अब क्यों नचाती है? ॥ ६ ॥

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ७ ॥

( सं० टी० ) गमनागमनं कुर्वन् रविर्हरति जीवितम् ॥ सेवितं यैर्हरेः पादकंजं तेषां सुजीवनम् ॥ १ ॥ जगदुन्मादं दुःखसहिष्णुतां कालज्ञानं च दर्शयति–आदित्येति । गतागतैर्गमनागमनैः उदयाचलादस्ताचलं प्रति गमनमागमनं तु ततः पुनरुदयाचलं प्रति । एवंप्रकारकैर्गतागतैरहरहः प्रतिदिनं जीवितमायुः क्षीयते नश्यति । व्यापारैर्जगदनेकव्यवहारैः । कथंभूतैः? बहुकार्यभारगुरुभिः बहूनि कार्याण्येव भारा वोढुमशक्यास्तैर्गुरुभिर्महद्भिः । कालो मरणं कियदायुर्गतं कियदवशिष्टमिति तु कैश्चिदपि न विज्ञायते न विशेषेणानुभूयते । जन्मादिमरणान्तं कर्म सर्वेषामात्मनोऽपि न दृष्ट्वा स्वनेत्रगोचरीकृत्वाऽपि त्रासो भयं नोत्पद्यते । अनिष्टकरणात्कश्चिदपि न निवर्तते इति भावः । तत्र हेतुमाह–पीत्वेति । मोहप्रचुरां प्रमादरूपां मदिरां पीत्वा जगत् गमनशीलं उन्मत्तभूतं कर्तव्याकर्तव्यविचारशून्यं जातमिति शेषः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७ ॥

( भा० टी० ) सूर्यके उदय अस्त होनेसे दिन दिन आयुष्य घटती जाती है. अनेक कार्योंकरके भारी व्यापारमें बीता काल जाना नहीं जाता और जन्म, वृद्धपन, विपत्ति और मरण देखकेभी त्रास नहीं होता. इससे यह निश्चित हुआ कि–'मोहमयीही प्रमादरूपी मदिरा पीके जगत् मतवाला हो रहा है!' ॥ ७ ॥

दीनादीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितैर्नरैर्न विधुरा दृश्येत चेद्गेहिनी ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥ ८ ॥

( सं० टी० ) आतिदीनमुखैः पुत्रैर्युक्ता पत्नी कदम्बरा ॥ न भवेद्देहिनो गेही देहीतीह कथं वदेत् ॥ १ ॥ पुत्रादिसंग्रहो विवेकिनामपि दुःखद इत्याह-दीनेति । दीनेभ्योऽप्यतिदीनानि मुखानि येषां तैः शिशुकैर्बालैराकृष्टं जीर्णमम्बरं वस्त्रं यस्याः सा । कथंभूतैः क्रोशद्भिरन्नार्थं रुदद्भिरन्यैश्च गृहनरैः क्षुधितैर्विधुराऽतिदुःखवती एतादृशी गेहिनी भार्या चेत् यदि न दृश्यते, मनस्विना जनेनेति शेषः । याच्याभङ्गभयेन याच्ञा देहीति प्रार्थना तस्या भङ्गो नाशः न दास्यामीति दातुर्वाक्येन तद्भयेन गद्गदं सबाष्पं गलत् पतत्पदतो वर्णतो वा त्रुट्यत् विलीनान्यस्पष्टान्यक्षराणि यस्मिन्वाक्ये तत्क्रियाविशेषणं वा को मनस्वी जनः धीरः वदेत् देहीति कः कथयेत् । स्वजठरानलेन दग्धस्य जठरस्यार्थे स्वोदरपूरणायेत्यर्थः । अत्र आकारप्रश्लेषः कार्योऽन्यथाऽर्थभ्रंशः स्यात । वृत्तं पूर्वोक्तम् ॥ ८ ॥

( भा० टी० ) आप तो दीन और उनके दीनबालक दुःखसे शोचते खसोटते हैं तिसपर कुटुंबके लोगोंको भूँखे देखकर दुःखी और ऐसी दुर्दशामें पडी स्त्री न दिखाई पडे तो ऐसा कौन धीर पुरुष है कि, अपने भूँखे पेटके हेतु याचनाभंग होनेके भयसे विह्वल कण्ठसे टूटे ' देओ ' ऐसे अक्षर निकाले ॥ ८ ॥

निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्योत्थानं घनतिमिररुद्धे च नयने
अहो धृष्टः कायस्तदपि मरणापायचकितः ॥ ९ ॥

( सं० टी० ) स्वीयानां मरणं दृष्ट्वा त्यक्त्वा भीतिं मृतेः पुमान् ॥ भवसागरपाराय कृष्णचंद्रं सदा भजेत् ॥ १ ॥ मरणभयशङ्कितं पुरुषं दूषयति-निवृत्तेति । भोगेच्छा पूर्वं यथाऽऽसीत्तथेदानीं नास्त्यतो देहेन्द्रियवैकल्यात् निवृत्ता क्षीणा । पुरुषेषु मध्ये यो बहुमानः सत्कारः सोपि विगलितः नष्टः । निवृत्तेति संसारिणं प्रति संबोधनं वा । समानाः सवयसः स्वर्याताः मृताः । इदानीं येऽवशिष्टाः सुहृदस्तेऽपि जीवितसमाः जीवितं समं पूर्णं येषाम् । अथवा स्वजीवनतुल्यास्ते दृष्टदस्तिष्ठंतु म्रियंतां वा, तैः किमित्यर्थः । आसनादु-

स्थानं शनैर्न वेगात्तदपि यष्ट्याश्रयेण लगुडाधारेण न स्वत इत्यर्थः । घनेन निबिडेन तिमिरेणांधकारेण रुद्धे आवृते नयने । अहो आश्चर्यं तदपि सर्वेषां निधनं दृष्ट्वापि मरणरूपोऽपायो नाशस्तस्मिन् चकितः शंकितः । अहमपि मरिष्यामि किमिति भीत इति यावत् । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९॥

( भा० टी० ) विषयभोगकी इच्छा यून्न हुई, लोगोंमें अपना मान भी घटा, समान वयवालेभी मरगये, जो इष्ट मित्र थे वेभी समाप्त हुए, आपभी लकड़ी टेककर उठने लगे और आखोंमें अँधेरी छाई, तौभी यह काया ऐसी निर्लज्ज है कि, अपना मरण सुन चकित हो जाती है॥ ९॥

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं
व्यालानां पशवस्तृणांकुरभुजः सृष्टाः स्थलीशायिनः
संसारार्णवलंघनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १० ॥

( सं० टी० ) धात्रा तु निर्मिता सृष्टिर्जीविका न यथोचिता ॥ कृतांतं सर्वजीवानां जीविकादं हरिं भजेत् ॥ १ ॥ संसारिणां विधिकृतोत्पत्तिं तेनैव कृतां विषमां वृत्तिं पर्यालोचयन्नाह-हिंसेति । हिंसाशून्यं जीवबाधारहितमयत्नलभ्यमश्रमसाध्यं दधातीति धाता तेन धारकेण पोषकेण "डुधाञ् धारणपोषणयोः" इति स्मरणात् । व्यालानां सर्पाणां मरुद्वायुरशनं भोजनं कल्पितं विरचितम् । श्रीकृष्णं विना ब्रह्मणोऽपि धारणपोषणज्ञानं सम्यङ् नास्तीति सूचितम् । तृणांकुरभुजः पशवोऽप्रार्थितलभ्यभोजनाः स्थलीशायिनः अकृत्रिमा भूमिः स्थली तत्र शयनशीलाः । संसाररूपोऽर्णवः समुद्रस्तल्लंघने क्षमा समर्था धीर्येषां तेषां नृणां सा वृत्तिः कृता रचिता यामन्वेषयतां संपादयतां सर्वे गुणा अन्वेषणादयः समाप्तिं विरामं यान्ति । वृत्तयो न स्थिरा भवंतीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

( भा० टी० ) विधाताने हिंसारहित विना प्रयत्न घर बैठे वायुभोजन सर्पोंके लिये जीविका बनाई, वैसेही माँगे विना मिलनेवाला 'घास और कोमल पत्ते' यह पशुओंका भोजन बनाया; और उसी विधाताने जिनकी बुद्धि संसारसमुद्र लांघनेको समर्थ है उन मनुष्योंकी वृत्ति

ऐसी बनाई कि, जिसके खोजमें सब गुण समाप्त हो जाँय पर वह न सिद्ध होय ॥ १० ॥

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ११ ॥

( सं० टी० ) हरेर्ध्यानं सदा कार्यं जगतो नाशहेतवे । नार्यादिविषयासक्तो न नयेत्कालमात्मनः ॥ १ ॥ उभयलोकसुखसाधनहीनं जनं निंदत्यात्मनि दर्शनमिषेण—नेति । ईश्वरस्य सर्वनियन्तुः पदं चरणम् । जातावेकवचनं विधिवद्विधौ पूजाप्रकारके यो विधिर्नियमस्तेन न ध्यातम् । अन्यथा उदरभरणनिमित्तमरणपर्यंतं कपटेन ध्यातमेवेत्यर्थः । किमर्थमित्याशंक्य तद्दर्शयाति । संसारस्य जननमरणप्रवाहरूपस्य विच्छित्तये उन्मूलनाय नाशायेत्यर्थः । मुक्तिसाधनहीनं प्रदर्श्य स्वर्गादिसुखसाधनहीनत्वं दर्शयति—स्वर्गेति । स्वर्गद्वारकपाटवदुरितं वर्तमानजन्मन्यन्यजन्मनि कृतं वा तस्य पाटनमुन्मूलनं पुण्यकर्म प्रायश्चित्तादिजीवाभयदानादिरूपो यो धर्मः सोऽपि नोपार्जितः उद्यम्य न गृहीतः । जगतः स्थूलसुखादपि हीनत्वं दर्शयति । नार्याः पीनयोरतिपुष्टयोः पयोधरयोः स्तनयोर्युगलं तादृशोरूर्वोश्च युगलं द्वयं स्वप्नेऽपि नालिंगितं स्वांगैर्नाश्लेषितम् । मातुर्यौवनमेव वनं तच्छेदने दूरीकरणे कुठाराः छेदनशस्त्राणि केवलम्, नैवान्यत्किंचित्कृतमिवि भावः । वृत्तं पूर्वोक्तम् ॥ ११ ॥

( भा० टी० ) संसारके छेदनके लिये ईश्वरके चरणकमलका विधिवत ध्यान न किया, स्वर्गद्वारके कपाट खोलनेमें निपुण धर्मकाभी संचय न किया और नारीके पुष्टपयोधरभी स्वप्नमें छातीसे न लगाये. हम तो केवल माताका यौवनरूपी वन काटनेके हेतु कुल्हाड़ाही उत्पन्न हुए ! ॥ ११ ॥

भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ १२ ॥

( सं० टी० ) भोगादयस्तु नैवाप्तास्तैः प्राप्तं निधनं खलु ॥ तृष्णा जीर्णा न मे हन्त जीर्णः कृष्णं कथं भजे ॥ १ ॥ भोगेति । भोगाः स्रगादयो नैव भुक्ताः, किंतु तैस्तदभिलाषैर्वयमेव भुक्ताः । कालो न यातो वयमेव याताः, यस्मिन्काले यत्कर्म कर्तुमुचितं तत्कर्मविहीनो यातः गतः कालो घटिकादिर्न यातो न गतः, किन्तु वयमेव याताः । यस्मिन्काले यदुचितं तपः कृच्छ्रादि तत् न तप्तम् । स्वधर्माचरणेन हीना जाता इत्यर्थः । एवं च तृष्णाशान्तिर्न जाता । तस्मात्केनापि प्रकारेण जन्मनः साफल्यं नाभूदिति भावः । वृत्तमुपजातिः । लक्षणं पूर्वोक्तम् ॥ १२ ॥

( भा० टी० ) विषयोंको हम न भोगे, परन्तु विषयोंने हमारा भुगतान कर दिया; हम तप न तपे, पर तपहीने हमें तपा डाला; काल व्यतीत न हुआ, पर वयसही हमारी बीत गई; और तृष्णा पुरानी न हुई, पर हमही पुराने हो गए! ॥ १२ ॥

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढा दुःसहशीतवाततपनाः क्लेशान्न तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वंचितम् ॥ १३ ॥

( सं० टी० ) क्षमादिसाधनैर्युक्तैस्त्यक्त्वा न गृहसंपदः ॥ मुन्युक्ते कर्मणां पाके लुब्धैः कृष्णो न सेवितः ॥ १ ॥ क्षांतमिति । गृहे यदुचितं भोजनादिसुखं तत्क्षमया न शान्तम् । किंतु रोगादिपरवशेन संतोषादलंबुद्ध्या त्यक्तमपि न । शीतादयः सोढाः । तपनोऽग्निः । दारिद्र्यभावेन क्लेशात् शास्त्रीयं तपः इज्याग्न्यादिरूपं तु न तप्तम् । तत्तत्कर्म तादृशं तादृशं कर्म कृतं तत्तत्फलैः तेषां तेषां कर्मणां फलैर्मुनिभिः कर्मोपदेष्टृभिः निश्चितं वंचितम् । लघ्वीकृतमित्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १३ ॥

( भा० टी० ) क्षमा तो हमने की, परन्तु धर्म विचारके न की अर्थात् अशक्ततासे की; गृहसुख तो छोड़ा, परन्तु संतोष पकड़के न छोड़ा; शीतोष्ण वायुका दुःसह दुःख सहा, पर तप न किया. धनका ध्यान करते रहे, परन्तु समाहित होके कल्याणदाता शिवके चरण न ध्याये; हम

विचारवान् होकर सौ सौ कर्म किये, परन्तु उलटे मुनिकथित उनके फलमें ठगे गए ! ॥ १३ ॥

वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १४ ॥

( सं० टी० ) दुर्वर्णं वदनं वालपकेशैः शुक्लैः शिरोऽङ्कितम् । गात्रं तु शिथिलं सर्वं तृष्णा तारुण्यमेत्यहो ॥ १ ॥ जरया ग्रस्तदेहस्य शिथिलांघ्रिकरक्रिया । शिथिलं धीन्द्रियं शान्तं न स्वान्तं विषयाध्वनः ॥ २ ॥ वार्धक्येऽपि तृष्णाधिक्यं भवतीति दर्शयति-वलिरिति । वलिभिर्मांसलताभिः मुखं आक्रान्तं व्याप्तम् । पलितैः सितकेशैः शिरो मस्तकं अंकितं चिह्नितम् । गात्राणि करचरणाद्यवयवाः स्वक्रियासु कुण्ठिता भवन्ति । परंतु तृष्णा या एका मुख्या सा तु तरुणायते तरुणीवाचरति । कदापि शान्ता न भवतीत्यर्थः । अनुष्टुप् वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १४ ॥

( भा० टी० ) मुँहके चमड़े सिकुड़ गए, सिरके बाल धवले हो गये और सब अंग शिथिल हो गये; पर एक तृष्णाही तरुण होती जाती है ! ॥ १४ ॥

येनैवाम्बरखंडेन संवीतो निशि चन्द्रमाः ।
तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ १५ ॥

( सं० टी० ) महत्सु दुर्गतिं दृष्ट्वा स्वस्मिन्प्राप्तां न दूषयेत् ॥ इति शिक्षा कृता सद्भिः पद्येऽस्मिन् विमलाशयैः ॥ १ ॥ येनेति । येन अम्बरखण्डेनाल्पाभ्रेण निशि रात्रौ चन्द्रमाः संवीतो वेष्टितस्तेनैव न वस्त्वंतरेण दिवा दिवसे भानुरपि संवेष्टितो भवति । एतयोश्चंद्रसूर्ययोरपि दौर्गत्यं दैन्यमस्ति । अहो इति आश्चर्यम् । तत्किं स्वस्मिन्निति भावः । अनुष्टुप् वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १५ ॥

( भा० टी० ) जिस आकाशके खण्डपर रात्रिको चन्द्रमा व्यतीत करता, उसीपर दिनको सूर्य करता है. देखो, ये दोनों इस भ्रमणमें कैसी दुर्दशाको प्राप्त होते हैं; पर कुछ फलभी नहीं प्राप्त करते ! ॥ १५ ॥

अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।

व्रजन्तः स्वातंत्र्याद्तुलपरितापाय मनसः
स्वयं त्यक्त्वा ह्येते शमसुखमनन्तं विदधति ॥ १६ ॥

( सं० टी० ) गच्छतो वस्तुनः स्वाङ्गे महत्सौख्यं प्रदर्शितम् ॥ स्वेच्छया गमनं तस्य हृत्तापं विदधद्व्रजेत् ॥ १ ॥ अवश्यमिति । चिरतरं बहुकालमुषित्वा वासं कृत्वा । एते प्रसिद्धा विषयाः भोग्यपदार्थाः हि निश्चितं यातारोऽवश्यं वं यास्यन्ति गमिष्यंति । तदा वियोगे विश्लेषे को भेदः । यद्येन जनो भोक्ता स्वयममून् विषयान्न त्यजति । ननु गमनशीलत्वात् स्वयमेव यास्यन्ति । को लाभस्तत्त्यागे इत्याशंक्य स्वयं त्यागे सुखम् । स्वेच्छागमनेन दुःखं च दर्शयति । स्वेच्छया व्रजन्तो विषया मनसः परितः सर्वतस्तापाय भवन्ति । स्वयं त्यक्ताः सन्तः शमं शान्तं सुखम् । अतएवानन्तमपरिच्छिन्नं विदधति कुर्वन्ति । हीति निश्चयेन । तस्मात्पुरुषेण शान्तिसुखार्थं विषयत्यागोऽवश्यं कार्य इति भावः । शिखरिणीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ १६ ॥

( भा० टी० ) बहुत कालपर्यन्त वास कियेहुए विषय अन्तमें अवश्य छूटेंगे. फिर उनके वियोग होनेमें क्या संशय रहा ? जिससे यह मनुष्य पहिले आपही न त्याग दे; क्योंकि जब वे आपसे छोड़ेंगे तो मनको बडा संताप देंगे और जो आप छोड़ देगा तो महासुखको प्राप्त होगा ॥ १६ ॥

विवेकव्याकोशे विदधति शमे शाम्यति तृषा
परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः ।
जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपण-
स्तृषापात्रं तस्यां भवति मरुतामप्यधिपतिः ॥ १७ ॥

( सं० टी० ) तृष्णाधिकारमाह–विवेकेति । तृषा तृष्णा शमे उपशमे सति शाम्यति उपशमं गच्छति । क्व सति । विवेकस्य व्याकोशे विकाशे सति । सा परिणतिः तृष्णापरिणामः तुंगे उन्नते परिष्वंगे आश्लेषे सति प्रसरति युक्तोऽयमर्थः । अपरापि या विलासिनी भवति सा तुङ्गे परिष्वंगे सति नितरां प्रसरति ननु व्याप्तिं भजते । लब्धावकाशत्वात् तथा सा तृष्णापि मरुतां देवानामप्यधिपतिः इन्द्रः । यस्यां तृष्णायां तृषापात्रं भवति । तुंगे परिष्वंगे छेत्तुम-

शक्तो भवतीत्यर्थः । मनुजानां तु का कथा । किंविशिष्टो मरुतामधिपतिः जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपणः जराजीर्णं ऐश्वर्यं तस्य ग्रसनेन यद्गहनं तस्य आक्षेपे कृपणः विध्वंसे असमर्थः । अतः कारणात् तृष्णा गरीयसी इति भावः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १७ ॥

( भा० टी० ) अब तृष्णाका वर्णन करते हैं—विवेक उत्पन्न होनेसे तृष्णा उपशमको प्राप्त होती है, और तृष्णाका परिणाम हो जाता है. वृद्धिंगत भई हुई तृष्णाका आलिंगन करनेसे फिर बढ़ती है. यह तो युक्त अर्थ है. परंतु जैसे उत्तुंगस्तनवाली विलासिनी स्त्रीका आलिंगन करनेसे वह व्याप्तिको प्राप्त होती है; क्योंकि उसको अवकाश मिलता है, तो यह तृष्णाका आलिंगन करनेसे इसका छेदन करनेको मनुष्य समर्थ नहीं है. इसमें कोई आश्चर्यकी बात नहीं है; क्योंकि इंद्रभी इस तृष्णाको त्याग करनेमें असमर्थ है तो पामर मनुष्योंकी बातही क्या ? ॥ १७ ॥

सदा योगाभ्यासव्यसनवशयोरात्ममनसो-
रविच्छिन्ना मैत्री स्फुरति यमिनस्तस्य किमु तैः ।
प्रियाणामालापैरधरमधुभिर्वक्त्रविधुभिः
सनिश्वासामोदैः सकुचकलशाश्लेषसुरतैः ॥ १८ ॥

( सं० टी० ) निरंतरं परब्रह्मैकतानमनसः पुरुषस्य प्रियभाषणादिना संतोषः नोत्पद्यत इत्याह-सदेति । सदा योगाभ्यासस्य व्यसनेन वशयोः आत्मा च मनश्च आत्ममनसी तयोरविच्छिन्ना मैत्री स्फुरति वर्तते । एवंभूतस्य तस्य यमिनः इन्द्रियनिग्रहकर्तुः । तैः किमु किं प्रयोजनम् । तैः कैः प्रियाणामालापैः अधरमधुभिः वक्त्रविधुभिः वक्त्रात् निष्कासितैः निःश्वासेन सह आमोदैः सुगन्धैः कुचकलशानामाश्लेषैः आलिंगनैः सह सुरतैः इत्यादिभिः किं प्रयोजनम् । सदा विषयत्यागपूर्वकब्रह्मचिन्तनमेव कार्यमिति भावः । शिखरिणीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ १८ ॥

( भा० टी० ) जिनका आत्मा और मन सदा योगाभ्यासहीके

व्यसनमें लगा है और उसीसे जिन जितेन्द्रियोंकी निरंतर मैत्री बनी है; फिर उन्हें प्रियस्त्रियोंके सम्भाषण, अधरामृत, सुगन्धसहित मुखकमलका श्वास और कुचकलश हृदयमें लगाकर सुरतसुख इन वस्तुओंसे क्या प्रयोजन है ? ॥ १८ ॥

भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम्।
वस्त्रं च जीर्णशतखण्डमलीनकन्था
हा हा तथापि विषया न परित्यजन्ति ॥ १९ ॥

( सं० टी० ) विषयाणां परित्यागोऽतिदुर्घट इत्याह-भिक्षेति । हाहा इति खेदे। विषयास्तथापि न परित्यजन्ति । कीदृक् समीपं न मुञ्चन्ति । तथापीति किं, भिक्षाशनं तदपि नीरसं रसरहितं तदप्येकवारम् । चान्यच्छय्या च भूः। अन्यच्च परिजनो परिवारो निजदेहमात्रं स्वदेहमात्रम् । चान्यत् वस्त्रं जीर्णं शतखण्डमपि मलीनकंथा । तथापि विषया दुराशया विषोपमा यान्ति प्राणिनाम् । वसन्ततिलकावृत्तम् । लक्षणं पूर्वोक्तम् ॥ १९ ॥

( भा० टी० ) नीरस अन्न एकही बेर भीख मांगके खाते हैं; भूमिहीपर सोते हैं; कुटुंबभी उनका देह मात्रही है; पुराने वस्त्र सैंकडों टुकड़ोंकीसी गुदड़ी पहिने ऐसी दशामें प्राप्त हैं तौभी बड़ा आश्चर्य है कि, उन्हें विषयवासना नहीं परित्याग करती ! ॥ १९ ॥

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशांकेन तुलितम्।
स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघन-
महो! निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ २० ॥

( सं० टी० ) कविजनविशेषैर्गुरुकृतं स्त्रीणां रूपं वस्तुतो विचारे कृतेऽतिनिन्द्यमिति वर्णयन्नाह-स्तनाविति । अहो इति दुःखे । निंद्यं रूपं कविजनविशेषैः कविश्रेष्ठैर्गुरु महत्कृतं कल्पितम् । कथं निंद्यम् । स्तनौ कुचौ मांसस्य ग्रंथी । परमित्युपमितौ उपमानितौ । इति किम् । कनककलशौ सुवर्णकलशौ ।

चान्यत् मुखं श्लेष्मागारं तदपि शशांकेन तुलितं चंद्रमसा समानं कृतम्। जघनं स्रवन्मूत्रक्लिन्नं तथापि करिवरकरस्पर्धि गजेंद्रशुण्डादण्डेन स्पर्धाकारकं रूपं यस्येति। स्वरूपं परं मुकविना व्यासेन वर्णितं तस्मादतिनिन्द्यं स्त्रीरूपमस्ति अतस्तद्विषयोऽत्यन्ताभिलाषो न स्वीकरणाय इति भावः। वृत्तं शिखरिणी। लक्षणं पूर्वोक्तम्॥ २०॥

(भा० टी०) स्त्रियोंके स्तन मांसके लोंदे हैं, उन्हें स्वर्णकलशकी उपमा देते हैं; मुख थूक खकारका गृह है, उसे चन्द्रमाके सम कहते हैं और टपकतेहुए मूत्रसे भीगी जांघोंको गजश्रेष्ठकी सूंडके समान कहते हैं; तो देखो कि, अत्यन्त निन्दायोग्य स्त्रियोंका रूप है उसे कवियोंने कैसा बढाया है!॥ २०॥

अजानन् माहात्म्यं पततु शलभो दीपदहने
स मीनोऽप्यज्ञानाद्बडिशयुतमश्नातु पिशितम्।
विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा॥ २१॥

(सं० टी०) मोहस्य दुर्निवारणमाह-अजानन्निति। अहह इति खेदे। मोहमहिमा गहनो वर्तते। यत्तु शलभः पतङ्गः दीपदहने दीपशिखायां पततु। शलभः किं कुर्वन्माहात्म्यं अजानन्। स मीनो मत्स्यः अज्ञानान्मौढ्यात् बडिशेन मत्स्यवेधनेन युतं पिशितं मांसं अश्नातु भक्षयतु। इह अस्मिन् संसारे एते वयं विजानंतोऽपि कामान्न मुञ्चामः। कथम्भूतान्। कामान्, विपज्जालजटिलान् विपदां जालो विपज्जालः तेन जटिलास्तान्। अत एव मोहमहिमा गरीयानिति भावः। शिखरिणी वृत्तम्। लक्षणं पूर्वोक्तम्॥ २१॥

(भा० टी०) देखो, पतंग दीपककी अग्निमें आय गिरता है. पर यह नहीं जानता कि, मैं नष्ट होऊंगा; मछली जो कटियाका मांस निगल जाती है वहभी नहीं जानती, कि इससे मेरे प्राण निकल जायँगे; पर हम लोगोंको देखो कि, जान बुझके दुखदाई विषयोंकी अभिलाषा नहीं छोड़ते. अहो! यह महामोहकी महिमा अति कठिन है॥ २१॥

विसमलमशनाय स्वादु पानाय तोयं
शयनमवनिपृष्ठे वल्कले वाससी च ।
नवधनमधुपानभ्रान्तसर्वेंद्रियाणा-
मविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ २२ ॥

( सं० टी० ) अथ दुर्जनानामविनीतं चरितमतिदुःसहमित्याह-विसमिति । अहं दुर्जनानां पिशुनानामविनयमनुमन्तुं अंगीकर्तुं नोत्सहे नोत्साहं कुर्वे । कथम्भूतानां दुर्जनानाम् । नवधनमधुपानभ्रांतसर्वेंद्रियाणां, नवं नवीनोपार्जितं धनं नवधनं तदेव मधुपानं मदिरापानं तेन मधुपानेन भ्रांतानि सर्वाणींद्रियाणि येषां ते नवधनमधुपानभ्रांतसर्वेंद्रियास्तेषाम् । अलमत्यर्थं अशनाय भोजनाय बिसं कमलिनीकन्दम् । चान्यत् । स्वादु पानाय तोयम् । चान्यदवनिपृष्ठे शयनं, चान्यद्वाससी वल्कलं चीरम् । एवं वन्यफलादिना जीवनं सफलं परंतु न खलवास इति भावः । मालिनी वृत्त । लक्षणं पूर्वोक्तम् ॥ २२ ॥

( भा० टी० ) भोजनके लिये कमलकन्द बस है; मधुर जल पीनेको बस है; सोनेको पृथ्वी बस है और पहिरनेके निमित्त वृक्षके बकले बस हैं; परन्तु नवसञ्चित थोडासा धनरूपी मदिरापानवाले कि जिनकी सब इन्द्रियां घुमती हैं, ऐसे दुर्जनोंका निरादर हम क्यों सहें ? ॥ २२ ॥

विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं तथा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ २३ ॥

( सं० टी० ) मानिताकरणमनुचितमित्याह-विपुलेति । पुंसां पुरुषाणां क एष मदज्वरः । क सति कतिपयपुरस्वाम्ये सति । धन्यैः कैश्चित्पुरा पूर्वं जगज्जनितं जगत्सृष्टम् । कथंभूतैर्धन्यैर्विपुलहृदयैः बृहद्धृदयैः । अपरैर्विष्णवादिभिर्विधृतं निजभुजाभ्यां धारितम् । अन्यैः परशुरामादिपुरुषैः चान्यद्दत्तम् । किं कृत्वा विजित्य । यथाशब्दः इवार्थे वर्तते । जगत्किमिव तृणमिव यथा तृणमनायासेन दीयते तथा जगद्विजित्य कश्यपादिभ्यो दत्तं हि निश्चितम् ।

इहास्मिन् जीवलोके अन्ये धीराश्चतुर्दश भुवनानि भुञ्जते । तथा स्वल्पस्वाम्ये कोऽयं गर्व इत्यर्थः । हरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ २३ ॥

( भा० टी० ) कोई महात्मा ऐसे भये जिन्होंने जगत्को उत्पन्न किया; कोई ऐसे हुए कि, जिन्होंने धारण किया; कोई ऐसे हुए कि जिन्होंने इसको जीतकर तुच्छ समझ औरोंकोही देदिया और कोई ऐसे हैं कि चौदहों भुवनोंको पालते हैं. पर यहां देखो कि, थोडेसे गांवोंकी ठकुराई पाकर कैसा अभिमानका ज्वर लोगोंको होता है ? ॥ २३ ॥

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः<br>
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।<br>
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं<br>
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निस्पृहाः ॥२४॥

( सं० टी० ) निस्पृहस्य श्रेष्ठत्वमाह—त्वमिति । हे नरेन्द्र ! त्वं राज्या वर्तसे, वयमपि उपासितगुरुप्रज्ञाभिमानोन्नता वर्तामहे । राजेन्द्र ! त्वं विभवैः ख्यातः, नः अस्माकं यशांसि महत्त्वानि कवयः कवीश्वरा दिक्षु प्रतन्वंति दशस्वपि दिशासु विस्तारयंति । हे मानद ! मानं ददातीति मानदः 'दो अवखण्डने' इति धातुः । हे मानखण्डन ! आवयोरुभयोरपि अंतरं नातिदूरे । राजेंद्र ! यदि च त्वं अस्मासु पराङ्मुखोऽसि तदा वयमपि एकांततो निस्पृहा वर्तामहे । अत्यन्तनिःस्पृहत्वाद्वयं त्वदीयादरेच्छां न कुर्मः इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ २४ ॥

( भा० टी० ) तू राजा है तो हमभी गुरुकी सेवा कर बुद्धिमान् हो उच्चपदको प्राप्त हुए हैं; तू यदि धनसे प्रसिद्ध है तो हमारी विद्याका यश कविलोग देशान्तरोंमें वर्णन कर रहे हैं; फिर तू हमसे मुख फेरता है तो हम तुझसे अधिक निस्पृह हैं ! ॥ २४ ॥

अभुक्तायां यस्यां क्षणमपि न यातं नृपशतै-<br>
र्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् ।

तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ २५ ॥

( सं० टी० ) लोके भूपतित्वाभिमानोऽतितुच्छत्वाद्वृथैवेत्याह-अभुक्तेति । जडा मूर्खाः विषादे कर्तव्ये प्रत्युत सम्मुखं मुदं विदधति। कथम् ? क्षितिभुजां राज्ञां तस्या भुवः पृथ्व्या लाभे क इव बहुमानः । यस्यां पृथिव्यां अभुक्तायां सत्यां नृपशतैर्नरेंद्रशतैः क्षणमपि न यातं न गतम्। तदंशस्याप्यंशे तस्याः पृथिव्या विभागस्यापि विभागे तदवयवलेशे तस्यांगस्यापि लेशेऽपि पतयः स्वामिनः । यत्किंचित्पतित्वलाभेऽपि हर्षो न कार्य इति भावः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ २५ ॥

( भा० टी० ) सैंकड़ों राजा जिस पृथ्वीको अपनी अपनी मान चले गये, पर उनसे यह भोगी न गई; तो इसके लाभ होनेसे राजाओंको क्या अभिमान करना चाहिये ? पर अब तो उसके टुकड़ेका टुकड़ा फिर तिसका टुकड़ा उससेभी न्यून अंश पाके अपनेको भूपति मानते हैं, तो जो बात सोच करनेके योग्य है उसमें मूर्खलोग देखो उलटेही आनंद मानते हैं, यह आश्चर्य है! ॥ २५ ॥

मृत्पिंडो जलरेखया वलयितः सर्वोऽप्ययं न त्वणु-
रङ्गीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते।
तद्दद्युर्ददतेऽथवा न किमपि क्षुद्रा दरिद्रा भृशं
धिक् धिक् तान्पुरुषाधमान्धनकणं वाञ्छन्ति तेभ्योऽपि ये॥२६॥

( सं० टी० ) राजभ्यो धनादियाचनमनुचितमिति सूचयन्नाह-यदिति । तान् पुरुषाधमान् धिक्, येऽधुना तेभ्योऽपि धनकणं वाञ्छन्ति । कथमयं मृत्पिण्डः पृथ्वीचयः सर्वोऽपि जलरेखया वलयितः सन् । ननु अणुः स्वल्पप्रमाणः । तु पुनः स एव मृत्पिण्डः । राज्ञां गणैर्भुज्यते । किं कृत्वा ? संयुगशतैः संग्रामविभागीकृत्य रणे शनैः अंगीकृत्य ते क्षुद्रा दरिद्रा राजानः भृशमत्यर्थं किमपि न दद्युः । अथवा न ददते । तानेव पुरुषान् धिक् धिक् । ये तेभ्योऽपि वाञ्छां कुर्वन्ति ते त्वतिनिन्द्या इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ २६ ॥

( भा० टी० ) यह भूमिरूप एक मिट्टीका लोदा पानीकी रेखासे घिराहुआ है, पहिले आपही यह सम्पूर्ण छोटासा है. तिसे राजा सैंकडों लड़ाइयां लड़लड़कर अपना अपना भाग बांटके किसी प्रकारसे भोगते हैं. ऐसे क्षुद्र और दरिद्रोंको जो बड़े दानी कहते हैं, अबभी देखें दान करते हैं या नहीं यों कह कहके उनसे धनकी कणिकाकी वांछा करते हैं तिन अधम पुरुषोंको धिक्कार है ! ॥ २६ ॥

न नटा न विटा न गायना न परद्रोहनिबद्धबुद्धयः ।
नृपसद्मनि नाम के वयं कुचभारानमिता न योषितः ॥ २७ ॥

( सं० टी० ) दुर्भगसेवकस्य वाक्यमाह-नेति । नामेति संबोधने । नृपसद्मनि वयं के । वयं नटाः नृत्यकृत्यानिविष्टाः उत्तीर्णाः न । न विटाः धूर्ताः । न गायनाः । न परद्रोहनिबद्धबुद्धयः परद्रोहे निबद्धा बुद्धयो येषां ते परद्रोहनिबद्धबुद्धयः । वयं योषितोऽपि न । किंभूताः योषितः ? कुचभारानमिताः कुचभारेणासमंताद्भागेन नमिताः । एवंविधा अपि न । "षडविषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न स मात्रपराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः" इति लक्षणाद्वैतालीयं वृत्तम् ॥ २७ ॥

( भा० टी० ) न तो हम नट हैं, न झूँठे लबार हैं, न परस्त्रियोंमें लम्पट हैं, न गवैये हैं, न परद्रोही हैं और न बड़े बड़े स्तनवाली स्त्रियां हैं; फिर हमको राजाओंके घर कौन पूँछता है ? ॥ २७ ॥

पुरा विद्वत्ताऽऽसीदुपशमवतां क्लेशहतये
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् ।
इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखा-
नहो कष्टं साऽपि प्रतिदिनमधोऽधः प्रविशति ॥ २८ ॥

( सं० टी० ) पुरेति । पुरा पूर्वं उपशमवतां शान्तिमतां विद्वत्ता वैदुष्यं क्लेशहतये संसारनिवारणायासीत् । असौ विद्वत्ता कालेन गता विषयिणां विषयसंबंधि यत् सुखं तस्य सिद्ध्यै गता । अहो इति खेदे कष्टं विलोक्य । इदानीं शास्त्रविमुखान् शास्त्रपराङ्मुखान् क्षितितलभुजः राज्ञः प्रेक्ष्य निरीक्ष्य । साऽपि विद्वत्ता प्रतिदिनं दिनं प्रति अधोऽधः प्रविशति गच्छति । एवं च

विद्यारक्षणविषये पुरुषेण यतितव्यमिति भावः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ २८ ॥

( भा० टी० ) पहिले जो विद्या पण्डितोंके चित्तके क्लेश दूर करनेके निमित्त थी, फिर कुछ दिन परे वह विद्या विषयी लोगोंके विषयसुख सिद्ध होनेके लिये हुई अर्थात् विद्यासे राजाओंको प्रसन्न करके धन-आदि ले सुखभोग करना इस कामकी हुई. इस समय राजाओंको शास्त्र सुननेसे विमुख देखकर प्रतिदिन वह विद्या अधोगतिको प्राप्त होती जाती है. यह बड़ा कष्ट है ॥ २८ ॥

स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलङ्कारविषये ।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ २९ ॥

( सं० टी० ) आजन्म मरणपर्यंतं भक्तिपूर्वकं ईशाराधनं कुर्वतां पुरुषाणां जनन-साफल्यं नान्येषामिति सूचयन् साहंकारं पुरुषमुद्दिश्याह–स जात इति । कोऽपि पुरुष आसीत् । यस्य पुरुषस्य कपालमुच्चैर्यथा भवति तथा मदनरिपोर्महेशस्य मूर्ध्नि मस्तके अलंकारविषये विनिहितम् । कथंभूतं कपालम् ? धवलमुज्ज्वलम् । अधुना सांप्रतं इदानीं कैश्चित् प्राणत्राणप्रवणमतिभिः प्राणस्य त्राणं तत्र प्रवणा मतिर्येषां ते प्राणत्राणप्रवणमतयस्तैः नमद्भिः नृभिः । पुंसां पुरुषाणां कोऽयं अतुलदर्पज्वरभरः अतिकुत्सित इत्यर्थः । वृत्तं पूर्वोक्तम् ॥ २९ ॥

( भा० टी० ) पहिले तो ऐसे पुरुष हुए हैं कि, जिनके उज्ज्वलमस्तकको माला बनाकर शिवजीने धारण किया कि, जिससे कंठका भूषण हुआ. अब देखो, अपने प्राणपोषण करनेवाले थोडेसे मनुष्योंसे प्रतिष्ठा पाकर कैसे अभिमानके ज्वरसे भारी हो रहे हैं ? ॥ २९ ॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं
शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः ।

सेवंते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥३०॥

( सं० टी० ) कश्चिन्निस्पृहो यतिः राजानं प्रति वदति–अर्थानामिति । हे राजन्! त्वमर्थानां द्रव्याणामीशिषे त्वं समर्थो भवसि । वयमपि गिरां वाणीनामीश्महे ईशितारो समर्था भवामः । चान्यत्त्वं यावदित्थं अमुना प्रकारेण च शूरोऽसि । अस्माकमपि वादिदर्पज्वरशमनविधौ वादिनां दर्पः अहङ्कारस्तस्य ज्वरस्तस्य शमनविधौ नाशविधौ अक्षयं निश्चलं पाटवं वर्तते । हे राजन्! त्वां बुधाः सेवंते । मामपि श्रोतुकामाः श्रोतारः सेवंते । किमर्थम्? मतिमलहतये बुद्धिकालुष्यनाशाय । अधुना मयि ते तव आस्था नैव । चेत्तर्हि ममापि त्वयि सुतरां आस्था नास्ति । हे राजन्! एषः अहं गतोऽस्मि । स्रग्धरावृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३० ॥

(भा० टी०) तुम धनके कोशके ईश्वर हौ, तो हमभी विद्याके कोशके ईश्वर हैं; तुम युद्ध करनेमें वीर हौ, तो हमभी शास्त्रार्थ करनेवाले वादियोंके अभिमानका ज्वर तोडनेमें कुशल हैं; तुम्हें धनाढ्य अथवा धन चाहनेवाले आशाग्रसित बडे लोग सेवन करते हैं, तो हमेंभी अपने बुद्धिका अज्ञान दूर करनेको शास्त्र सुननेकी इच्छावाले लोग सेवते हैं; सो हे राजन्! यदि हमारे विषय तुह्मारी श्रद्धा नहीं है, तो तुममेंभी हमारी न हो. ऐसे हमभी बने हैं. देखो, ये हम चले जाते हैं! ॥ ३० ॥

अतिक्रान्तः कालो लटभललनाभोगसुभगो
भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणौ ।
इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः
सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥ ३१ ॥

( सं० टी० ) अतीति । हे बाले! लटभललनाभोगसुभगः कालोऽतिक्रान्तः अतिचक्राम सम्पूर्णीकृतः । लटभाः आप्तलावण्या या ललनास्तासां भोगेन सुभगो मनोज्ञः लटभललनाभोगसुभगः । इहास्मिन् मर्त्यलोके संसारसरणौ सुचिरं भ्रमन्तः श्रान्ताः स्मः । इदानीं स्वःसिन्धोः स्वर्गंगायास्तटभुवि कच्छस्थलीषु शिव शिव शिवेति प्रतनुमः विस्तारयामः । कथंभूता वयम्? सुतारैः

फूत्कारैः समाक्रन्दनगिरः । हे बाले ! त्वं काऽसि ? तव मुखं न विलोकयामः । वृत्तं शिखरिणी । लक्षणं पूर्वोक्तम् ॥ ३१ ॥

( भा० टी० ) हे बाले ! इस संसारसरणीमें बहुत दिनतक प्राप्त यौवनवाली स्त्रियोंके भोगसुखमें फिरते फिरते काल व्यतीत हो गया ! अब इस समय थक गये हैं, तो अब क्या करेंगे ? गंगाजीके तटपर ' शिव शिव शिव ' ऐसे नामका विस्तार करेंगे, यानी तेरा मुखभी नहीं देखेंगे !! ॥ ३१ ॥

मानें म्लायिनि खण्डिते च वसुनि व्यर्थं प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ।
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ ३२ ॥

( सं० टी० ) इहास्मिन्संसारे मानादीनां नाशे सति तत्संपादने पुनर्यत्नमकृत्वा भागीरथ्या विराजमानहिमालयकुंजेष्वावासो विधेय इत्याह-मान इति । सुधियां पुरुषाणां केवलमेतदेव युक्तम् । यत्क्वचित् जन्हुकन्यायाः गंगायाः पयसा पूताः पवित्रा ये ग्रावाणस्तेषामसौ गिरीन्द्रः पर्वतस्तस्य कन्दरस्य विवरस्य या दरी गुहा तस्या निकुंजस्तस्मिन् निवासो वरम् । क्व सति ? माने म्लायिनि सति । चान्यद्वसुनि खण्डिते सति । चान्यदर्थिनि याचके व्यर्थं प्रयाते सति । चान्यत्क्व सति ? क्षीणं बंधुजने सति । पुनः क्व सति ? परिजने गते सति । पुनः क्व सति ? यौवने नष्टे सति । तदा वनवास एव रुचिरः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३२ ॥

( भा० टी० ) अब प्रतिष्ठा भंग हुई, द्रव्यनाश हो गया, याचक लोग आय आय विमुख हो जाने लगे, भ्राता स्त्री पुत्र और सम्बन्धी आदि भ्रष्ट हो गए; उस समय बुद्धिमान् पुरुषोंको उचित है कि, जिस पर्वतके पाषाण गंगाजलसे पवित्र हैं उस ( हिमालय ) की कंदराके समीप दरी और कुंजमेंही कहीं निवास करें ॥ ३२ ॥

परेषां चेतांसि प्रतिदिवसमाराध्य बहु हा
प्रसादं किं नेतुं विशसि हृदय क्लेशकलितम् ।

प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे
विमुक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥ ३३ ॥

( सं० टी० ) परेषां चेतःप्रसादकरणापेक्षया स्वान्तःकरणप्रसादकरणमेव वरमिति चित्तं प्रति बोधः-परेषामिति । हा इति खेदे । हे हृदय ! बहु प्रसादं किं नेतुं ग्रहीतुं विशसि । किं कृत्वा । परेषां अन्येषां चेतांसि प्रतिदिवसं आराध्य। कीदृशं प्रसादं, क्लेशकलितं कष्टमलिनम् । हे हृदय ! त्वयि अंतर्मध्ये प्रसन्ने सति । अभिलषितं वाञ्छितं ते तव न पुष्याति किम् । त्वायि स्वयमुदितचिन्तामणिगुणे किं विमुक्तः संकल्पः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३३ ॥

( भा० टी० ) हे मन ! तू पराये चित्तको प्रसन्न करके क्या प्रसाद लेनेके हेतु क्लेशसे मलीन होता हुआ घुसता है ? तू सर्व संकल्प अर्थात् तृष्णाको छोड़कर अपनेहीमें प्रसन्न होकर चिन्तामणिकेसे गुण प्रकट करेगा अर्थात् शांति संतोषादि गुण ग्रहण करेगा तो क्या तेरी अभिलाषा पूरी न होगी ? अर्थात् जरूर पूरी होगी ॥ ३३ ॥

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
मौने दैन्यभयं बले रिपुभयं रूपे जराया भयम् ।
शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ ३४ ॥

( सं० टी० ) स्रक्चंदनस्त्र्यादिसर्वभोगानां सभयत्वात्सर्वप्रकारेण अभयं एतादृशं वैराग्यमेवाकलनीयमित्याशयेनाह-भोग इति । स्रक्चंदनवनितादिभोगे रोगाद्भयं भीतिः, स्रक्चंदनादिशीतलेन वातोत्पत्तिर्भवति, स्त्रीभोगेन बलहानिर्भवाति । कुले च्युतिभयं 'दोषः कस्य कुले नास्ति' इति न्यायेन बहुकुलं यत्र तदा दोषो भवत्येव, दोषेण पतति च्युतं भवति । अथवा मरणेन कुलक्षयो भवाति । वित्ते धने नृपालात् राज्ञः सकाशाद्भयं भवति । मौने मौनवृत्त्यां अथवा न किंचिद्ददति न याचते तस्य को वा ददाति अतो दैन्यं भवति । बले अतिबलिष्ठ रिपुभयं शत्रुभयं भवति । रूपे सौंदर्ये जरया वार्धक्येन विरूपता जायते । शास्त्रे शास्त्रपठने वादिनां भयम् । गुणे सद्गुणे खलभयं, खलस्तु विपरीतं दोषारोपणं करोति । काये शरीरे मृत्युभयम् । एवं सर्वं वस्तुजातं भुवि भयान्वितं वर्तते

अतो वैराग्यमेवाभयं सर्वपदार्थेषु । वैराग्यवान् पुरुषः न याचयति विरोधं नैव करोति । सर्वत्र वीतरागः सन्नास्ते इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३४ ॥

( भा० टी० ) भोगमें रोगका भय, उत्तम कुलमें च्युतिका भय, अधिक द्रव्य होनेमें राजभय, मौन होनेमें दीनताका भय, बलवान् होनेमें शत्रुभय, रूपमें वृद्धावस्थाका भय, शास्त्रमें वादका भय, सद्गुणमें दुर्जनका भय और शरीरमें मृत्युका भय, यों सर्वत्र भयहीके स्थान देख पडते हैं; किन्तु केवल वैराग्यही निर्भय ठौर है ॥ ३४ ॥

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःशंकमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ३५ ॥

( सं० टी० ) अस्थिरप्राणानां रक्षणार्थं नृपादीनामग्रे स्वगुणप्रख्यापनमनुचितमिति सूचयन्नाह—अमीषामिति । अस्माभिरमीषां प्राणानां कृते किं न व्यवसितं उद्यमितम् । कथंभूतैः ? अस्माभिर्विगलितविवेकैर्विगलितो भ्रष्टो विवेको येषां तैर्विवेकरहितैः । कथंभूतानां प्राणानाम् ? तुलितबिसिनीपत्रपयसां, तुलितं बिसिनीपत्रपयो येषां तेषां अस्थिरस्थायिनामित्यर्थः । यदाढ्यानामग्रे धनवतां पुरः वीतव्रीडैर्वीतलज्जैरस्माभिः निजगुणकथापातकमपि कृतं निजगुणानां कथया पातकं निजगुणकथापातकम् । किंभूतानां आढ्यानाम् ? । द्रविणमदनिःशंकमनसां द्रविणमदेन धनमदेन निःशंकं मनो येषां तेषाम् । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३५ ॥

( भा० टी० ) जैसे कमलके पत्रपर जलके बूंद चंचल रहते हैं, वैसेही इन चञ्चल प्राणोंके हेतु विवेक त्यागकर हमने क्या क्या न किया ? क्योंकि ‘धनके मदसे मदान्ध लोगोंके निकट अपना गुण गान करना’ यह पाप निर्लज्ज होके किया !॥ ३५ ॥

भ्रातः कष्टमहो महान्स नृपतिः सामन्तचक्रं च तत्
पार्श्वे तस्य च सापि राजपरिषत्ताश्चन्द्रबिम्बाननाः ।

उद्रिक्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः
सर्वं यस्य वशादगात् स्मृतिपदं कालाय तस्मै नमः ॥३६॥

( सं० टी० ) सर्वमिदं जगत्कालाधीनमतः अस्थिरस्थायिनां नृपाणां सेवनं त्यक्त्वा भगवत्सेवनमेव सदा कार्यमिति सूचयन्नाह-भ्रातरिति । तस्मै कालाय नमः। अहो इत्याश्चर्ये । भो भ्रातः ! कष्टं विलोक्यताम् । किं कष्टं स एव महान्नृपतिः, चान्यत्सामंतचक्रं मांडलिकराजमंडलं, चान्यत्तस्य पार्श्वे सापि राजपरिषत्सा राजसभा । चान्यत्ताश्चन्द्रबिम्बानना नार्यः । चान्यत्स राजपुत्रनिवहः नृपकुमारसमूहः । कथंभूतो राजपुत्रनिवहः ? उद्रिक्तः सदर्पः । चान्यत्ते बंदिनः भद्राश्चान्यत्ताः कथाः । यस्य वशात् तत्सर्वं पूर्वोक्तं स्मृतिपदमगात्कथाशेषं जगाम । कालाय तस्मै नमः । यतः सर्वं क्षीयते, परंतु कालो न क्षीयते इति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३६ ॥

( भा० टी० ) पहिले यहां कैसा सार्वभौम राजा था ? उसके समीप मांडलिक राजाओंका मण्डल कैसा उत्तम था ? और राजसभा कैसी थी ? और चन्द्रमुखी स्त्रियां कैसी शोभायमान थीं ? और राजाओंके पुत्रोंका समूह कैसा प्रबल था ? कैसे बन्दीगण थे और वे कैसी अच्छी कथा कहते थे ? अब वे सब जिस कालके वश होकर लुप्त हो गए उस कालको नमस्कार है ॥ ३६ ॥

वयं येभ्यो जाताश्चिरपरिगता एव खलु ते
समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।
इदानीमेते स्मः प्रतिदिवसमासन्नपतनात्
गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ३७ ॥

( सं० टी० ) स्वदेहरक्षणार्थं राजसेवनं क्रियते, तस्य देहस्य तु अस्थिरत्वात्तद्विषये आस्थां त्यक्त्वा ईश्वराराधने यत्नः कार्य इत्यभिप्रायेण पुनः कालमुद्दिश्याह–वयमिति । येभ्यः समानवयोभ्यः समं जाताः । खलु निश्चितम् । ते चिरपरिगता एव मृता एव । यैः समं वृद्धास्तेऽपि स्मृतिविषयतां गमिताः । स्मृतेर्विषयता स्मृतिविषयता तां स्मारिताः । संतश्चेतोगोचरमायान्तीत्यर्थः । इदानीं

एते वयं स्मः सावरोधं किं वयम्। सिकतिलनदीतीरतरुभिः तुल्यावस्थां गताः सिकतिला बालुकाधिका नदी सिकतिलनदी तस्याः तीरतरवः शीघ्रपतनशीला भवन्तीत्यर्थः। यादृशास्ते तरवस्तादृगवस्थां वयं प्राप्ताः स्मः। कस्मात् प्रतिदिवसं दिवसं प्रति आसन्नपतनात् मरणात्। एतावता संसारस्यावस्था ईदृशी वर्तते। शिखरिणी वृत्तम्। लक्षणं पूर्वोक्तम्॥ ३७॥

(भा॰ टी॰) जिनसे हम जन्मे थे, उनको तो गए बहुत दिन बीते, फिर जिनके साथ हम बडे हुए, वेभी स्मरणपदमें गए अर्थात् मरे. अब हमभी दिन दिन गिरते देख पडते हैं और नदीकिनारेकी वालूमें उत्पन्न भये हुए वृक्षके तुल्य दशाको प्राप्त हो रहे हैं!॥ ३७॥

यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र चान्ते न चैकः।
इत्थं चेमौ रजनिदिवसौ दोलयन् द्वाविवाक्षौ
कालः काल्या सह बहुकलः क्रीडति प्राणिसारैः॥ ३८॥

(सं॰ टी॰) सर्वस्य कालाधीनत्वात्पुत्रवित्तगृहादिष्वास्था न कर्तव्या इत्याह– यत्रेति। कालो मृत्युः काल्या सह कालरात्र्या सह प्राणिसारैः कृतकाष्ठशुष्कैः क्रीडितुमारभते। कथंभूतः कालः? बहुकलः बह्वी कला यस्यासौ बहुकलः। किं कुर्वन्? इमौ द्वौ रजनीदिवसौ इत्थमनेन प्रकारेण अक्षयौ विषयपाशाववे दोलयन् प्रक्षिपन्। युक्तोऽयमर्थः। अन्योऽपि यो द्यूतकृत् क्रीडां कुरुते स तस्याक्षौ पाशकौ विधूनयति। अत्र कालः क्रीडकः। रजनीदिवसावेव पाशकौ। इत्थं कथयन् यत्र क्वचिदपि गृहे अनेकः एकस्तत्र तिष्ठति अपि पुनः यत्र एकस्तत्र बहवः यत्र बहवस्तत्र चान्ते एकोऽपि न। कालक्रीडाया इत्थं स्वभावः। मन्दाक्रान्ता वृत्तम्। "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" इति लक्षणात्॥ ३८॥

(भा॰ टी॰) जिस घरमें अनेक थे, वहां एक दृष्टि पडता है और जहां एक था वहां अनेक देख पडते हैं; फिर वहां एकभी रह जाता है तो देखो रात और दिनके पासे लुढका लुढकाके इस संसाररूपी चौपडमें प्राणियोंको गोटी बनाके कालपुरुष अपनी कालित्वशक्तिसे खेल रहा है॥ ३८॥

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदर्कान् दारानुत परिचरामः सविनयम् ।
पिबामः शास्त्रौघान् द्रुतविविधकाव्यामृतरसान्
न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ३९ ॥

( सं० टी० ) सर्वेषु पदार्थेषु संशये प्राप्ते सति तेषां परं तप एवात्यंतिकसुखद- मित्याशयेनाह—तपेति । जने लोके न विद्मः वयं किं कुर्मः । किमिति संशये । सुरनदीं गंगां निवसामः आश्रयं कुर्मः किम् । वयं तपस्यन्तः सन्तः तपः कुर्वन्तः सन्तः । उत अथवा दारान् कलत्राणि परिचर्यां कुर्मः । कथंभूतान् दारान् ? गुणोदर्कान् गुणोत्कटान् । उत अथवा शास्त्रौघान् पिबामः शृणुमः । किंभूतान् शास्त्रौघान् ? द्रुतविविधकाव्यामृतरसान् द्रुतः स्रुतः विविधामृतरसो येषु तान् वयं न विद्मः अस्माकं संशयो वर्तते । एतेषु पदार्थेषु किं कुर्मः यो गुणाधिकस्तं सेवयामः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ३९ ॥

( भा० टी० ) तप करते हुए गंगातटपर बसेंगे अथवा गुणवती स्त्रि- योंके संग प्रेमसहित विचरेंगे ? वा वेदान्त आदि शास्त्रोंके समूह और अनेक काव्यामृतरस पियेंगे ? इस निमेषमात्र आयुष्यवाले देहसे न जाने हम क्या करेंगे ? ॥ ३९ ॥

गंगातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशंकाः
संप्राप्स्यन्ते जरठहरिणाः शृंगकंडूविनोदम् ॥ ४० ॥

( सं० टी० ) अत्यन्तसुखदा सिद्धिर्मम कदा भविष्यतीत्याकांक्षते—गंगेति— किमिति संभावनायाम् । मम तैः सुदिवसैर्भाव्यम् । यत्र दिवसेषु जरठहरिणाः प्रौढमृगा निर्विशंकाः विगतभयाः संतः शृंगकंडूविनोदं शृंगघर्षणलीलां संप्रा- प्स्यंते । कथंभूतस्य मम ? हिमगिरिशिलायां बद्धं पद्मासनं येन तस्य । क्व ? गंगा- तीरे । पुनः किंभूतस्य मम ? योगनिद्रां गतस्य योगस्य निद्रा योगनिद्रा तां गतः प्राप्तः तस्य । केन ब्रह्मध्यानाभ्यसनविधिना, ब्रह्मध्यानस्याभ्यसनं ब्रह्मध्याना- भ्यसनं तस्य यो विधिः ब्रह्मध्यानाभ्यसनविधिस्तेन । एवंविधेन निर्मल-

भावेन सुखसाध्या सिद्धसिद्धिर्भविष्यतीत्यर्थः। मन्दाक्रांता वृत्तम्। लक्षणं पूर्वोक्तम् ॥ ४० ॥

( भा० टी० ) गंगाके तटमें हिमाचलकी शिलापर आसन लगाय पद्मासन बांधे बैठेंगे, ब्रह्मज्ञानके अभ्यासमें विधिपूर्वक आंख मूंद योग-निद्रामें प्राप्त होंगे; देखें हमारे ऐसे सुदिन कब होते हैं? जहां निःशंक हो बूढे हरिण हमारे देहमें रगड़के अपने शृंगकी खुजलाहट मिटावेंगे ॥ ४० ॥

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः।
भवाभोगोद्विग्नाः शिवशिवशिवेत्यार्तवचसा
कदा स्यामानंदोद्गतबहुलबाष्पप्लुतदृशा ॥ ४१ ॥

( सं० टी० ) स्फुरदिति। वयं शिवशिवशिवेत्यार्तवचसा कदा स्याम। किंविशिष्टा वयम्? भवाभोगोद्विग्नाः भवस्य संसारस्याभोगस्तत्रोद्विग्नाः खिन्नाः। किंभूतेन वचसा? आनंदोद्गतबहुलबाष्पप्लुतदृशा आनंदेनोद्गतानि बहुलानि यानि बाष्पाणि तैः प्लुते दृशौ यस्मिन् तद्वचस्तेन। किंभूता वयम्? द्युसरितो गङ्गायाः क्वापि विजने पुलिने सुखासीनाः। कासु, रजनीषु। किंभूतासु रजनीषु शांतध्वनिषु? उपशांतशब्दासु। एवंविधा वासरा भाग्यहीनानां न भवेयुः। शिखरिणी वृत्तम्। लक्षणं पूर्वोक्तम् ॥ ४१ ॥

( भा० टी० ) जहां प्रकाशित फैली हुई चांदनीसे निर्मल हुआ है तल जिसका ऐसे गंगातटमें सुखसे बैठे रहकर, जब सब ध्वनि बन्द हो तब रात्रिमें 'शिव शिव शिव' ऐसे आर्तस्वरसे कहतेहुए संसारके दुःखसे व्याकुल हो और आनन्दके आंसुओंसे पूर्ण नेत्र हो रहे हैं, ऐसे हम कब होंगे? ॥ ४१ ॥

महादेवो देवः सरिदपि च सैषा सुरसरिद्
गुहा एवागारं वसनमपि ता एव हरितः।
सुहृद्वा कालोऽयं व्रतमिदमदैन्यव्रतमिदं
कियद्वा वक्ष्यामो वटविटप एवास्तु दयिता ॥ ४२ ॥

( सं० टी० ) महादेव इति । देवो महादेवो नान्यः । सरिदापि नद्यपि सुर- सरित्सुरनदी । अगारं गृहं गुहा एव । वसनमपि वस्त्रमपि ता एव हरितो दिशः । अथवा सुहृन्मित्रमयं कालः । इदमदैन्यव्रतं इदं व्रतं कियद्वक्ष्यामः । दयिता कलत्रं वटविटप एवास्तु । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४२ ॥

( भा० टी० ) अदैन्य व्रतकी प्रशंसा करते हैं. जिसके देव महा- देवही हैं, नदियोंमें प्रधान गंगाजी जिसकी नदी है और गुहाही घर हैं, दिशा यही वस्त्र हैं, सुहृद् वर्तमान काल है, वटवृक्षही जिसका कु- टुंब है, ऐसा अदैन्यव्रत सर्वोत्कृष्ट है ॥ ४२ ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तराऽतिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ ४३ ॥

( सं० टी० ) दुस्त्यजां आशां नदीरूपेण वर्णयति--आशेति । नामेति स- म्बोधने । आशा नदी अस्ति । किंभूता आशानदी, मनोरथा एव जलानि यस्यां सा । पुनः किंभूता ? तृष्णातरंगाकुला । पुनः किंभूता आशा नदी ? राग- ग्राहवती स्नेहग्राहयुक्ता । अन्यापि नदी ग्राहजलचरजीववती भवति । पुनः किंभूता आशानदी ? वितर्कविहगा वितर्का विचारास्त एव विहगाः पक्षिणो यस्यां सा । नद्यामपि विहंगा भवन्ति । अस्यामपि तथैव । पुनः किंभूता आशा नदी ? मोहावर्तसुदुस्तरा मोहस्यावर्तो मोहावर्तस्तेन सुदुस्तरा । अन्यापि नदी आवर्तैः दुस्तरा भवति । पुनः किंभूता आशानदी ? अतिगहना अतीव गहनं यस्याम् । अन्यापि नदी अतिगहना । पुनः किंभूता आशानदी ? धैर्यद्रुमध्वंसिनी धैर्यद्रुमस्य ध्वंसोऽस्या अस्तीति धैर्यद्रुमध्वंसिनी । अन्यापि नदी द्रुमध्वंसिनी भवति । पुनः किंभूता ? प्रोत्तुंगः चिन्ता एव तटो यस्याः सा । अन्यापि नदी तटिनी प्रोच्यते । तस्या नद्याः पारं गता योगीश्वरा नंदंति सर्वोत्कर्षेण वर्तते । योगीश्वराः विशुद्धमनसो निर्मलमानसाः । एवं च आशारहिताः पुरुषा अत्यंतसुखानंदानुभववन्तः स्युरिति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४३ ॥

( भा० टी० ) आशा नाम एक नदी है, मनोरथरूपी जल उसमें भरा है, वह तृष्णारूपी तरंगोंसे पूर्ण है, प्रीतिही उसमें मगर हैं, नानाविधिके तर्कही उसमें पक्षी हैं, वह धैर्यरूपी वृक्षको ढाहनेवाली है, मोहरूपी भौंर उसमें पड़े हैं, इससे बडी दुस्तर और कठिन हो रही है. बडी चिन्ताही उसके तट हैं. उसके पार होकर बड़े शुद्ध मननशील योगीही आनन्द पाते हैं ॥ ४३ ॥

आसंसारं त्रिभुवनमिदं चिन्वतां तात ताहङ्
नैवास्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा ।
योऽयं धत्ते विषयकरिणीगाढरूढाभिमान-
क्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ४४ ॥

( सं० टी० ) इंद्रियनिग्रहकर्तुः पुरुषस्य दौर्लभ्यमाह-आसंसारमिति । हे तात ! ताहक् ताहशः कोऽपि पुमान् अस्माकं नयनपदवीं नेत्रमार्गम् । वा अथवा श्रोत्रवर्त्म श्रोत्रमार्गं नागतः । योऽयं पुरुषः क्षीबस्यांतःकरणकरिणः संयमालानलीलां धत्ते धारयति । किम्भूतोऽयम् ? विषयकरिणीगाढरूढाभिमानः । विषय एव करिणी हस्तिनी तस्यां गाढो दृढः अत्यंतं रूढोऽभिमानो यस्य । किम्भूतानामस्माकम् ? आसंसारं संसारं यावत् । इदं त्रिभुवनं चिन्वतां सञ्चयतां वर्धयताम् । यो जितेंद्रियः सोऽस्यां धरणीतले अतिभाग्यवानिति भावः । मन्दाक्रान्ता वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४४ ॥

( भा० टी० ) जबसे यह संसार प्रवृत्त हुआ है, तबसे आजतक हे भैया ! हम त्रिभुवनमें खोजते फिरते हैं; पर ऐसा पुरुष देखने और सुननेमें न आया कि, जो विषयरूप हथिनीमें दृढ अभिमानी ऐसे अन्तःकरणरूपी उन्मत्त हाथीको संयमरूपी बेड़ी डालके रोंक रक्खे ॥ ४४ ॥

ये वर्तंते धनपतिपुरःप्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ।

तेषामन्तः स्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ ४५ ॥

( सं० टी० ) सांप्रतं निर्वेदतायाः स्वरूपमाह—ये वर्तन्त इति । अहं तेषां वासराणां अन्तरभ्यन्तरे स्फुरितं हसितं यस्मिन्कर्माणि यथा भवति तथा स्मरेयं चिन्तयामि । ये वासरा धनपतिपुरो धनाढ्यानां पुरस्तात्प्रार्थना याचना तस्याः यद्दुःखं तद्भजंतीति ते प्रार्थनादुःखभाजः वर्तंते । चान्यद्ये वासराः विषयाक्षेपपर्यस्ता बुद्धिर्यस्य स विषयाक्षेपपर्यस्तबुद्धिस्तस्य । किम्भूतोऽहम् ? शिखरिकुहरे या ग्रावशय्या तस्यां निषण्णः । वा शिखरिकुहरस्य पर्वतविवरस्य या ग्रावशय्या तत्र निषण्णः निविष्टः । मन्दाक्रान्ता वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४५ ॥

( भा० टी० ) धनवानोंके निकट जो प्रार्थनाका दुःख सहते हैं और जो बड़ी विषयकी सामग्रीमें फैलीहुई बुद्धिवालोंसे अपनेको छोटा समझते हैं, उनके व्यर्थ व्यतीत दिनोंको हम अन्तःकरणमें हँसकर ध्यानसे विश्राम पाकर पर्वतकी कंदरामें पत्थरकी चट्टानपर बैठे हुए कब स्मरण करेंगे ? ॥ ४५ ॥

विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं
शुश्रूषाऽपि समाहितेन मनसा पित्रोर्न सम्पादिता ।
आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ ४६ ॥

( सं० टी० ) विद्यादिरहितानां जीवनं लोके व्यर्थं स्यादतः विद्यैवावश्यमाकलनीया इति बोधयन्नाह—विद्येति । अहो अयं कालोऽस्माभिः परपिण्डलोलुपतया काकैरिव प्रेरितः परपिण्डस्य परग्रासस्य लोलुपता तया कथमस्माभिर्विद्या नाधिगता न पठिता । किम्भूता विद्या । कलङ्करहिता दोषरहिता इत्यर्थः । चान्यद्वित्तं धनं नोपार्जितं न सम्पादितम् । अपि पुनः समाहितेन मनसा निश्चलचित्तेन पित्रोर्मातृजनकयोः शुश्रूषा सेवाऽपि न संपादिता न कृता । चान्यत्स्वप्नेऽपि युवतयो नालिंगिताः । किम्भूता युवतयः ? आलोलायतलोचनाः आसमन्ताद्भावेन लोलानि चपलानि आयतानि दीर्घाणि लोचनानि नेत्राणि यासां ताः । कस्मात् कारणात्

सुधैव पिंडभक्षणे काकरूपवज्जन्म गमितमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४६ ॥

( भा० टी० ) निष्कलंक विद्या नहीं पढ़ी, धन न कमाया, एकाग्रचित्त होके मातापिताकी सेवा न की और चंचल तथा बडे नेत्रवाली स्त्रियोंको स्वप्नमेंभी गलेसे न लगाया; किन्तु पराये ग्रासका लोभ करते काककी नांई सब दिन योंही बिताये ! ॥ ४६ ॥

वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः
स्मरन्तः संसारे विगुणपरिणामावधिगतीः ।
वयं पुण्यारण्ये परिणतशरच्चन्द्रकिरणै-
स्त्रियामां नेष्यामो हरचरणचित्तैकशरणाः ॥ ४७ ॥

( सं० टी० ) अतिदुःखदं संसारं दृष्ट्वा तत्त्यागपूर्वकं अरण्ये स्थित्वा शिवाराधनमेव कर्तव्यमित्याशयेनाह–वितीर्ण इति । वयं पुण्ये पवित्रेऽरण्ये कदा त्रियामां रात्रिं नेष्यामः । कैः समं परिणतशरच्चन्द्रकिरणैः समं, परिणताः परिणामं प्राप्ता ये शरत्कालीनाश्चन्द्रकिरणाः परिणतशरच्चन्द्रकिरणास्तैः । क्व सति ? सर्वस्वे सर्वधने वितीर्णे दत्ते सति । किंभूता वयम् ? तरुणकरुणापूर्णहृदयाः, तरुणकरुणया पूर्णं हृदयं येषां ते तरुणकरुणापूर्णहृदयाः । वयं किं कुर्वन्तः ? संसारे विगुणपरिणामावधिगतीः स्मरंतः विगुणपरिणामावधयो गतयः विगुणपरिणामावधिगतयस्ताः । पुनः किंभूता वयम् ? हरचरणचित्तैकशरणाः, हरचरणावेव चित्तस्य एकं शरणं येषां ते वयम् । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४७ ॥

( भा० टी० ) जब सर्वस्व नष्ट हो गया तौभी बड़ी करुणा की; क्योंकि इस संसारमें कुछ सार नहीं, अन्तमें नश्वर है यों इसकी अवधिकी गति स्मरण करते शिवके चरणमें लगे हुए चित्तको अपना रक्षक समझ किसी पवित्र वनमें बैठ नम्र शरद् ऋतुकी चांदनीमें हम कब रात्रीको व्यतीत करेंगे ? ॥ ४७ ॥

वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषो निर्विशेषाविशेषः ।

स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ? ॥ ४८ ॥

( सं० टी० ) राजानं प्रति कस्यचिद्योगिनः उक्तिरिति वदति—वयमिति । हे राजेन्द्र ! इहास्मिन् संसारे वयं वल्कलैः कृत्वा परितुष्टाः, चान्यस्त्वं लक्ष्म्या परितुष्टः । अत एतावता सन्तोषस्य तत्त्वमेव इहास्मिन्नर्थे परितोषः सम एव । किम्भूतः परितोषः ? निर्विशेषावशेषः, निर्विशेष एव अवशेषोऽवसानं यस्य स निर्विशेषावशेषः विशेषश्चायम् । तु पुनः स दरिद्रो भवति । तस्य पुरुषस्य विशाला विस्तीर्णा तृष्णा । अनन्ततृष्णस्य पुंसः दारिद्र्यं क्वापि न यातीत्यागमः । तु पुनः मनसि परितुष्टे सति कोऽर्थवान् धनवान्, को दरिद्रश्च ? अपि तु न कोऽपीत्यर्थः । मालिनीवृत्तम् ॥ ४८ ॥

( भा० टी० ) हे राजा ! हम तौ वृक्षके वल्कल पहिरके संतुष्ट हैं, और तुम धनसे संतुष्ट हौ. जब हमारी तुम्हारी तुष्टि सम ठहरी, तब निर्विशेष हुआ अर्थात् भेद न रहा. दरिद्र वही है जिसे बडी तृष्णा है. जब मन संतोषसे पूर्ण होता है तब कौन दरिद्री और कौन धनवान् है ? ॥ ४८ ॥

यदेतत्स्वाच्छन्द्यं विहरणमकार्पण्यमशनं
सहार्यैः संवासः श्रुतमुपशमैकव्रतफलम् ।
मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृशन्
न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ४९ ॥

( सं० टी० ) स्वच्छंदेन वर्तनं तु महत्तपसः फलमित्याह—यदेति । तदहं न जाने एषा कस्य तपसः परिणतिः परिणामो वर्तते । एषा का परिणतिः ? यदेतत् स्वाच्छन्द्यं स्वच्छंदवर्तनवद्विहरणम् । अन्यच्चाकार्पण्यं दीनतारहितं अशनं भोजनम् । अन्यच्च सहार्यैः संवासः परिकरैः सह निवासः । उपशमैकव्रतफलं उपशमरसोद्भासितं श्रुतं शास्त्रश्रवणम् ? बहिरपि बाह्यप्रदेशेऽपि मनो मंदस्पंदं कल्पनारहितम् । अहं किं कुर्वन् । चिरस्य चिररात्राय विमृशन् विमृशतां कुर्वन् । चिरकालं विचिन्तयन्नित्यर्थः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ४९ ॥

( भा० टी० ) स्वाधीन विचरना, विना जांचे भोजन करना, श्रेष्ठ

पुरुषोंके संग रहना, शास्त्र कहना सुनना, यही उपशमरूपी व्रतका फल लेना और यदि मन बाह्य पदार्थोंमें हो तो विचार करता हुआ मन्द मन्द गमन यह सब प्राप्त होना न जाने किस प्राचीन और बड़े तपका फल है ? ॥ ४९ ॥

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं
विस्तीर्णं वस्त्रमाशासुदशकममलं तल्पमस्वल्पमुर्वी ।
येषां निःसङ्गताङ्गीकरणपरिणतिः स्वात्मसन्तोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥ ५० ॥

( सं० टी० ) निःसंगत्वेन दैन्यं त्यक्त्वा कर्मनिर्मूलकर्माणो पुरुषाः अतिधन्याः इत्याह—पाणिरिति । धन्यास्तु ते एव ये कर्म निर्मूलयन्ति । कथंभूताः धन्याः ? संन्यस्तदैन्यव्यतिकरनिकराः, संन्यस्तो निराकृतः दैन्यव्यतिकरस्य निकरो येस्ते । पुनः किम्भूतास्ते । स्वात्मसन्तोषिणः, स्वात्मन्येव संतोषो येषां ते । अन्यच्च येषां पुरुषाणां निःसंगतांगीकरणपरिणातिः, निःसंगतायाः अंगीकरणं निःसंगतांगीकरणं तस्य परिणतिः निःसंगतांगीकरणपरिणतिः । येषां च पुरुषाणां पात्रं भोजनभांडं पाणिः हस्तः । पवित्रं भ्रमणपरिगतं भैक्षं अक्षय्यमव्ययं अन्नं अद्यम् । वस्त्रं विस्तीर्णं आशासुदशकं अमलं निर्मलम् । अस्वल्पं विस्तीर्णं तल्पं शय्या उर्वी पृथ्वी । एवंविधरूपेण ये संसारपारं गच्छंति । त एव धन्याः पुण्यवन्त इत्यर्थः । स्रग्धरा वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५० ॥

( भा० टी० ) हाथही बरतन, फिरते घूमते जो कुछ मिले वोही उत्तम अन्न, दिशायें पहिरनेको उत्तम बड़ा वस्त्र, बडी विस्तारवाली पृथ्वी यही पलँग, ऐसे जो निःसंगता करके स्वात्मसंतोषवाले संन्यासी हैं वेही धन्य हैं, कि, जो दीनताको छोड कर्ममूलको उखेड डालते हैं !॥५०॥

दुराराध्यः स्वामी तुरगचलचित्ता क्षितिभुजो
वयं तु स्थूलेच्छा महति च पदे बद्धमनसः ।
जरा देहं मृत्युर्हरति सकलं जीवितमिदं
सखे नान्यच्छ्रेयो जगति विदुषोऽन्यत्र तपसः ॥ ५१ ॥

( सं० टी० ) चलचित्तराजाज्ञाधारणापेक्षया तप एवेहामुत्र श्रेयस्करमित्याह–दुराराध्य इति । हे सखे ! जगति रसायां विदुषः पण्डितस्य तपस अन्यत्रान्यत् श्रेयः कल्याणं न । कथम् ? स्वामी अधिपतिः दुराराध्यः दुःखेनापि आराधयितुं अशक्यः । क्षितिभुजो राजानः तुरगचलचित्ताः अश्ववच्चलचेतसः । तु पुनः वय स्थूलेच्छाः महाशयाः । चान्यन्महति पदे मुक्तिलक्षणे बद्धमनसः । जरा देहं हरति । मृत्युरिदं सकलं जीवितं हरति । ततस्तपसा विना श्रेयो नास्ति । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५१ ॥

( भा० टी० ) स्वामीलोग दुराराध्य हैं; कदाचित् राजाओंका सेवन करें तो वे घोडेके ऐसे चंचलचित्तवाले हैं; परम कल्याणकारी यह देह है पर इसे व्यर्थ जरा और मृत्यु संपूर्ण जीवित्वको हर लेती हैं; हे सखे ! हम कैसे हैं ? कि, महान् परब्रह्ममें चित्त लगाये हैं. सो इस जगत्में तपसिवाय दूसरा कोईभी पदार्थ उत्तम नहीं है ॥ ५१ ॥

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भंगुरम् ।
लोला यौवनलालना तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदद्ध्वं बुधाः ॥ ५२ ॥

( सं० टी० ) सर्वं विषयसुखं क्षणभंगुरं ज्ञात्वा निरुपमसुखप्राप्तये योगाभ्यास एव कर्तव्य इत्याह–भोगा इति । हे बुधाः योगे मनोवचनकायसंरोधलक्षणे बुद्धिं विदद्ध्वम् । इतरदखिलं नृणां तुषप्रायम् । कथम् ? भोगाः पञ्चांगाः मेघवितानमध्यविलसत्सौदामिनीचंचलाः, मेघवितानमध्ये विलसंति या सौदामिनी विद्युत्तद्वच्चञ्चलाश्चपलाः । चान्यदायुर्जीवितं वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भंगुरं, वायुविघट्टिता याऽभ्रपटली तत्र लीनं यदम्बु पानीयं तद्वद्भंगुरं विनाशशीलम् । तनुभृतां प्राणिनां यौवनलालना तारुण्यातिपालनं लोला चञ्चला वर्तते । इति आकलय्य इति विचिंत्य । द्रुतं शीघ्रं धैर्यसमाधिसिद्धिसुलभे योगे बुद्धिं विदद्ध्वं कुरुध्वम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५२ ॥

( भा० टी० ) विस्तृत मेघमें चमकती हुई बिजलीकी नाईं देहधारि-

---

१ 'लालसा' इत्यपि पाठः ।

योंके भोग चंचल हैं; वायुसे छिन्न भिन्न मेघजलके सदृश आयु नाशवान् है; और यौवनका उमंगभी स्थिर नहीं है; सो हे पंडितो ! ऐसा समझकर धैर्यसमाधिकी सिद्धिसे सुलभ जो योग है तिसमें बुद्धि धारण करो ॥ ५२ ॥

पुण्ये ग्रामे वने वा महति सितपदच्छन्नपालीं कपाली-
मादाय न्यायगर्भद्विजमुखहुतभुग्भूमधूम्रोपकण्ठम्[1] ।
द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणी स धन्यो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥५३॥

( सं० टी० ) मानिनः पुरुषस्य स्वकीयजने याचनापेक्षया भिक्षया जीवनं तु वरमित्याह-पुण्य इति । मानी प्राणी अभिमानी पुमान् क्षुधार्तः स धन्यः सुष्ठु वरं उदरदरीपूरणाय द्वारं द्वारं प्रवृत्तः । किं कृत्वा ? महति ग्रामेऽथवा वने कपालीं कर्परं आदाय गृहीत्वा । कथम्भूतां कपालीम् ? सितपटच्छन्नपालीं सितपटेन श्वेतवस्त्रेण छन्ना आच्छादिता पाली यस्याः सा ताम् । किंभूते ग्रामे वा वने ? पुण्ये पवित्रे । किम्भूतं द्वारम् ? न्यायगर्भद्विजमुखहुतभुग्भूमधूम्रोपकंठं, न्यायगर्भेण न्यायशास्त्रपठितेन द्विजमुखेन हुतभुक् वैश्वानरस्तस्य भूमा प्रचुरो धूम्रस्तेन व्याप्त उपकण्ठो यस्य तत् । तु पुनः अनुदिनं दिवसं दिवसंप्रति तुल्याः समानाः ये कुल्याः कुलोद्भवास्तेषु दीनो न भवेत्स पुरुषो धन्य इति भावः । स्रग्धरा वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५३ ॥

( भा० टी० ) पवित्र ग्राम अथवा पवित्र वनमें उज्ज्वल वस्त्रसे ढकाहुआ ठिकरा लेकर जिनकी चौखट न्यायपूर्वक ब्राह्मणोंकी होमीहुई अग्निके धूमसे मलिन हो उनके द्वारपर क्षुधासे पीडित पेटरूपी कन्दर भरनेको नित्य प्रति भ्रमण करता हुआ मानी पुरुष अच्छा है, पर समानकुलवालोंमें दीन होना अच्छा नहीं ! ॥ ५३ ॥

चाण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं तापसः
किं वा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम् ।

---

१ 'हुतभुग्धूमधूम्रोपकण्ठम्' इति पाठांतरम् ।

इत्युत्पन्नविकल्पजल्पमुखरैः सम्भाष्यमाणा जनै-
र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥ ५४ ॥

( सं० टी० ) सांप्रतं योगिनां स्थितिं दर्शयति—चाण्डाल इति । अत एव योगिनः पथि मार्गे जनैः एवं संभाष्यमाणाः न क्रुद्धाः यान्ति । किन्तु तुष्टमनसो सन्तुष्टान्तःकरणाः यान्ति । किम्भूतैः जनैः ? इत्यनेन प्रकारेण उत्पन्नविकल्पजल्पमुखरैः । इति किं अयं किं चाण्डालः । वाऽथवा द्विजो ब्राह्मणः । अथवा शूद्रः । अथवा किं तापसः । वाऽथवा योगीश्वरः । किम्भूतो योगीश्वरः ? तत्त्वनिवेशपेशलमतिः तत्त्वनिवेशे पेशला मनोज्ञा मतिर्यस्यासौ । एवंविधा निर्विकल्पास्त एव धन्या इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५४ ॥

( भा० टी० ) यह चंडाल है वा ब्राह्मण ? किंवा शूद्र, तपस्वी अथवा तत्त्वविवेकमें चतुर बुद्धिमान् कोई योगीश्वर है ? ऐसे संदिग्ध अनेक प्रकारके वक्ताजनोंसे संभाषण होतेहुए जो योगीलोग रागद्वेष नहीं करते किन्तु स्वच्छन्द अपने मार्ग चले जाते हैं वे अतिधन्य हैं ॥ ५४ ॥

सखे ! धन्याः केचित् त्रुटितभवबन्धव्यतिकरा
वनान्ते चित्तान्तर्विषमविषयाशीविषगताः ।
शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगां
नयन्ते ये रात्रिं सुकृतचयचित्तैकशरणाः ॥ ५५ ॥

( सं० टी० ) संसारतापहेतुभूतान्विषयान्परित्यज्य सर्वसुखप्राप्तिसाधनं वनवासं कुर्वतः पुरुषस्य धन्यतामाह—सखे इति । हे सखे मित्र ! त एव धन्याः ये एवम्प्रकारेण रात्रिं नयंते । किंभूतास्ते ? सुकृतचयचित्तैकचरणाः, सुकृतानां चयः सुकृतचयश्चित्ते एकं शरणं येषां ते सुकृतचयचित्तैकशरणाः । पुनः किंभूताः ? त्रुटितभवबंधव्यतिकराः, त्रुटितो भवबंधस्तस्य व्यतिकरो येषां ते । वनांते वनमध्ये चित्तांतर्विषमविषयाशीविषगताः, चित्तांतर्मानसमध्ये विषमो यो विषय एव आशीविषः दृष्टिविषोरगो गतो येषां ते । वा 'विषयविषयाशीर्विगलिताः' इति पाठः । किम्भूतां रात्रिम् ? शरचंद्रज्योत्स्नाधवलगगनाभोगसुभगां, शरचंद्रस्य ज्योत्स्नाया शरत्कालीनचन्द्रप्रभः कांत्या धवलेन गगनाभोगेन विस्तारेण

या सुभगा मनोज्ञा सा शरच्चंद्रज्योत्स्नाधवलगगनाभोगसुभगा ताम् । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५५ ॥

( भा० टी० ) हे सखे! वेही पुरुष धन्य हैं, कि जो इस प्रकारसे रात्रिको व्यतीत करते हैं. कैसे सो कि-पुण्यका जो चय ( ढगला ) उसमें एकाग्र चित्तसे जो सर्वदा लीन हैं; और जिनके संसारसंबंधी बंधन कट गये हैं; और जिनके हृदयमें विषमतारूप जो विषय, यही एक सर्प सो नष्ट हो गया है ऐसे जो महात्मा शरच्चंद्रकी ज्योत्स्ना ( कांति ) से शोभायमान गगनविस्तारसे मनोज्ञा कहिये मनको सुख देनेवाली ऐसी रात्रिको गँवाते हैं वेही धन्य हैं ॥ ५५ ॥

एतस्माद्विरमेंद्रियार्थगहनादायासकादाश्रया-
च्छ्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् ।
शान्तं भावमुपैहि संत्यज निजां कल्लोललोलां गतिं
मा भूयो भज भंगुरो भवरतिं चेतः प्रसीदाधुना ॥ ५६ ॥

( सं० टी० ) कश्चित्संसृतिदुःखेन खिन्नः पुरुषः स्वचित्तं प्रति प्रार्थयते । एतस्मादिति-हे चेतः! हे आत्मन्! अधुना प्रसीद प्रसादं कुरु । एतस्मादिंद्रियार्थगहनात् विरम । किम्भूतादिंद्रियार्थगहनात्? आयासकादाश्रयात् कुत्सित आश्रयः कदाश्रयस्तस्य भावः कादाश्रयः, आयासेन कादाश्रयः आयासकादाश्रयस्तस्मात् क्षणात् शांतं भावमुपैहि । किम्भूतं शांतं भावम्? श्रेयोमार्गम् । पुनः किम्भूतं शांतं भावम्? अशेषदुःखशमनव्यापारे दक्षं, अशेषाणि यानि दुःखानि तेषां शमनव्यापारे दक्षः । हे चेतः! निजां कल्लोललोलां गतिं संत्यज परिहर । भूयः भंगुरां विनश्वरां भवरतिं मा भज सेवय । एभिर्लक्षणैः संसारस्य बुद्धिरेव स्यात्तस्मात्कारणात्तां मा भजेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५६ ॥

( भा० टी० ) हे चित्त! दुखदाई इन्द्रियोंके विषयरूपी बनसे विश्राम ले; सकल दुःखध्वंस करनेके व्यापारमें समर्थ ऐसे कल्याणमार्गको शीघ्र प्राप्त हो; शांतभाव ग्रहण कर; तरंगसी अपनी चंचलगति छोड़ दे; इस

नाशवान् संसारी इच्छाका वारंवार सेवन मत कर और अब तू आपही प्रसन्नरूप हो ॥ ५६ ॥

पुण्यैर्मूलफलैः प्रिये प्रणयिनि प्रीतिं कुरुष्वाधुना
भूशय्यानववल्कलैरकरणैरुत्तिष्ठ यामो वनम् ।
क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा
वित्तव्याध्यविवेकविह्वलगिरां नामापि न श्रूयते ॥ ५७ ॥

( सं० टी० ) वनस्थितिं बहुमन्यमानस्य कस्यचित्पुरुषस्योक्तिमाह–पुण्यैरिति । हे प्रणयिनि ! हे प्रिये ! उत्तिष्ठ वनं यामः । यत्राविवेकमूढमनसां ईश्वराणां धनवतां नामापि न श्रूयते । किम्भूतानामीश्वराणाम् ? क्षुद्राणां तुच्छानाम् । पुनः किम्भूतानां ईश्वराणाम् ? वित्तव्याध्यविवेकविह्वलगिरां, वित्तव्याधीनां अविवेकेन विह्वला गीर्वाणी येषां तेषाम् । हे प्रिये ! पुण्यैः पवित्रैः मूलफलैः प्रीतिं कुरुष्व । अन्यच्च भूशय्यानववल्कलैः प्रीतिं कुरुष्व । किम्भूतैर्नववल्कलैः ? अकरणैः, क्रियते अनेनेति करणं, न करणं अकरणं, तैः करणक्रियारहितैः । एवं च धनेश्वराणां वार्ताऽपि कर्णप्रत्यक्षे माभूदिति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५७ ॥

( भा० टी० ) अब हम बनको जाते हैं सो हे नीतिज्ञ प्रिय बुद्धि ! तूभी हमसे अब प्रीति कर और उठ, आगे चल, और पवित्र फलमूलसे पोषण कर, बनी बनाई भूमि शय्या और नवीन वल्कलके वस्त्रोंसे निर्वाह कर. यदि तू पूछे कि कहां जाओगे ? तौ सुन–जहां अविवेकसे मूढमन क्षुद्र और धनरूपी व्याधिजनित अविचारसे जिनकी बुद्धि विह्वल है उन धनवान् लोगोंका नामभी न सुनाई दे, वहां जायंगे ॥ ५७ ॥

मोहं मार्जयतामुपार्जय रतिं चन्द्रार्धचूडामणौ
चेतः स्वर्गतरंगिणीतटभुवामासङ्गमंगीकुरु ।
को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु च स्त्रीषु च
ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः ॥ ५८ ॥

( सं० टी० ) विषयभोगेच्छां परित्यज्य शिवभक्तिं कुर्विति स्वचेतः प्रति

बोधयति—मोहमिति । हे चेतः ! मोहं मार्जयतां दूरीक्रियताम् । रे प्राणिन् ! चंद्रस्य अर्धः शकलं कला इति, स एव चूडामणिः शिरोरत्नं यस्य तस्मिन् शिवे रतिं तोषमुपार्जय संपादय । रे चेतः ! स्वर्गतरंगिणीतटभुवां आसङ्गं सङ्गतिमङ्गीकुरु । नोऽस्माकं वाऽथवा वीचिषु कल्लोलेषु प्रत्ययो विश्वासः । चान्यज्जलबुद्‌बुदेषु वर्षावारिपुटेषु कः प्रत्ययः । चान्यत्तडिल्लेखासु सौदामिनीषु कः प्रत्ययः । यथा एतेषु नोऽस्माकं प्रत्ययो नास्ति तथा जीवितेषु । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५८ ॥

( भा० टी० ) हे चित्त ! मोहको छोड़; शिवजी कि, जिनके शीसमें अर्द्धचंद्र विराजमान है उनसे प्रीति कर और गंगातटके वृक्षोंके नीचे विश्राम ले. देख ! तरंग, पानीके बुलबुले, बिजलीकी चमक, स्त्री, अग्निकी ज्वालाकी शिखा, सर्प और नदीका प्रवाह इनके स्थिर रहनेमें क्या विश्वास ? अर्थात् इन छहोंकी नाई सातवीं स्त्रीभी चंचल है, तिसके विलासमें मत भूल ॥ ५८ ॥

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावशपरिणतिश्चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लंपटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ५९ ॥

( सं० टी० ) सति विभवे संसाररसाभिलाषं कुरु, नो चेन्निर्विकल्पसमाधिं भजेति स्वचित्तं प्रार्थयते—अग्र इति । रे चेतः ! यदि एवमस्ति तदा भवरसास्वादने लंपटत्वं कुरु । एवं किं यदि तवाग्रे स्फीतं प्रचुरं गीतं भवति । अन्यच्च पार्श्वतो दाक्षिणात्या दक्षिणदेशीयाः सरसकवयो भवंति । अन्यच्च पृष्ठे चामरग्राहिणीनां सुंदरीणां लीलावशपरिणतिश्च भवति । यदैवंविधं सौख्यं भवति तदा संसारं कुरु । हे चेतः ! चेदेवं न तदा सहसा निर्विकल्पे समाधौ प्रवेशं कुरु । मंदाक्रान्ता वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ५९ ॥

( भा० टी० ) सन्मुख प्रवीण गवइए गाते हों, दहिने बाँए दक्षिण देशके सरस कविलोग काव्य सुनाते हों और पीछे चँवर डुलानेवाले सुंदर स्त्रियोंके कंकणकी मधुर झनकार होती हो, जो ऐसी सामग्री तुझे

प्राप्त हो तो संसारके रसका स्वाद लेनेमें लिपट; नहीं तो हे चित्त! स्थिर-समाधिमें प्रवेश कर ॥ ५९ ॥

विरमत बुधा! योषित्संगात्सुखात् क्षणभंगुरात्
कुरुत करुणामैत्रीप्रज्ञावधूजनसंगमम् ।
न खलु नरके हाराक्रान्तं घनस्तनमण्डलं
शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ६० ॥

( सं० टी० ) नरकतरणे योषित्संगादि सुखं त्यक्त्वा दयादिसेवनमेवावश्यं सम्माननीयमित्याह—विरमतेति । हे बुधाः! योषित्संगात्सुखाद्विरमत विरतिं भजत । किम्भूतात्सुखात्? क्षणभंगुरात् क्षणध्वंसिनः । करुणामैत्रीप्रज्ञावधूजन-संगमं कुरुत विदधत, करुणा च मैत्री च प्रज्ञाच च करुणामैत्रीप्रज्ञास्ता एव वधूजन-स्तस्य संगमः करुणामैत्रीप्रज्ञावधूजनसंगमस्तम् न खलु निश्चितं स्तनमण्डलम् । अथवा श्रोणीबिम्बं नितंबबिंबं शरणम् । कथंभूतं स्तनमण्डलम्? हाराक्रान्तं हार-विभूषितम् । पुनः कथंभूतम्? श्रोणीबिंबं रणन्मणिमेखलं, रणन्ती शब्दायमाना मणिमेखला कांची यस्मिंस्तत् रणन्मणिमेखलं । एतन्नरके शरणं न । हरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६० ॥

( भा० टी० ) हे पण्डितो! स्त्रियोंके संग और क्षणिक नश्वर सुखसे विश्राम लो और मैत्री करुणा और प्रजारूपी वधूसे संगम करो; नरकमें जब ताडना होगी उससमय हारोंसे भूषित स्त्रियोंके स्तनमंडल और क्षुद्रघंटिकासे शोभित कटि, सहायता नहीं करेगी! ॥ ६० ॥

मातर्लक्ष्मि भजस्व कंचिदपरं मत्कांक्षिणी मास्मभू-
र्भोगेभ्यः स्पृहयालवो नहि वयं का निःस्पृहाणामसि ।
सद्यः स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते
भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ ६१ ॥

( सं० टी० ) मातरिति । हे मातर्लक्ष्मि! कंचिद्वाऽपरं भजस्व । मत्कांक्षिणी मदिच्छावती मास्म भूः मा भूयाः । वयं भोगेभ्यो न स्पृहयालवः नेच्छवः । निस्पृहाणां निरीहाणां त्वं कासि?। वयं भिक्षासक्तुभिरेव संप्रतीदानीं वृत्तिं

दीनगतजीविकां समीहामहे वाञ्छामहे । क सति ? सद्यस्तत्कालं स्यूता कृत-सीवना या पलाशपत्राणां पुटिका संपुटिका सा एव पात्रं तस्मिन् । पवित्रीकृते यद्येवमस्माकं स्थितिस्तदा वयं त्वया किं कुर्मः । एवं च नोऽस्माकं तवोपयोग इति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६१ ॥

( भा० टी० ) हे लक्ष्मी माता ! अब तू अन्य किसी पुरुषका सेवन कर; हमारी आकांक्षा मत कर. हम विषयभोगके इच्छित नहीं. निस्पृही विरक्तोंके समीप तू तुच्छ है; क्योंकि अब हम हरे पलाशपत्रके पवित्र दोनेमें भिक्षाके सत्तूसे अपने जीवनवृत्तिकी इच्छा रखते हैं ॥ ६१ ॥

यूयं वयं वयं यूयमित्यासीन्मतिरावयोः ।
किं जातमधुना मित्र येन यूयं वयं वयम् ॥ ६२ ॥

( सं० टी० ) यूयमिति । हे मित्र ! पूर्वं आवयोः तव ममेत्यभेदबुद्धिरासीत् । कथम् ? यूयं भवंतः वयमेव, वयं यूयमेवेत्यभेदबुद्धिरासीत् । अधुना किं जातं निमित्तं, यूयं येन यूयमेव, वयं वयमेवेति भेदबुद्धिर्जाता । अनुष्टुप् वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६२ ॥

( भा० टी० ) जो तुम हो सो हम हैं और जो हम हैं सो तुम हो, परस्पर कुछ भेद नहीं है; ऐसीही बुद्धि हमारी प्रथम थी. अब क्या नई बात हुई कि, जिससे तुम तुह्मी हो, हम हमी हैं ॥ ६२ ॥

बाले लीलामुकुलितममी मन्थरा दृष्टिपाताः
किं क्षिप्यंते विरम विरम व्यर्थ एष श्रमस्ते ।
संप्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ६३ ॥

( सं० टी० ) स्वात्मनो वैराग्यस्थितिमाह—बाल इति । हे बाले हे सुंदरि ! तावकीनं लीलामुकुलितं अमी मंथरा दृष्टिपाता अस्मासु किं क्षिप्यंते, विरम विरम । एष ते तव श्रमो व्यर्थो निरर्थकः । संप्रति वयं अन्ये, ते न भवामः । अस्माकं बाल्यमुपरतं अस्माकमास्था । वनान्ते कथं क्षीणः मोहो गतः । इदं जगज्जालं तृणमिव तुच्छं विलोकयामः पश्यामः । एतादृशावस्थायां तव दृष्टिपातो व्यर्थ इति भावः । मन्दाक्रान्ता वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६३ ॥

( भा० टी० ) हे बाले! हे सुंदरि! लीलासे किंचित् मुकुलित ये तेरे कपटी दृष्टिपात व्यर्थ क्यों फेंकती है ? विरामको प्राप्त हो; क्योंकि यह तेरा परिश्रम व्यर्थ है. क्योंकि, सांप्रत कालमें हम औरही हो गये, हमारा अज्ञान निवृत्त हो गया है, मोह क्षीण हो गया है, सो अब हम इस जगत्‌रूपी जालको तृणके समान तुच्छ देखते हैं ॥ ६३ ॥

इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतो मोहोऽस्माकं स्मरकुसुमबाणव्यतिकर-
ज्वलज्ज्वाला शान्ता तदपि न वराकी विरमति ॥ ६४ ॥

( सं० टी० ) पूर्वोक्तां वैराग्यस्थितिं प्रकारांतरेण वर्णयति–इयमिति । इयं बाला मां प्रति चक्षुर्नेत्रं अनवरतं निरंतरं किं क्षिपति । कथंभूतं नेत्रं इंदीवरदलप्रभाचोरं, इंदीवरस्य कमलस्य दलं इंदीवरदलं तस्य प्रभां चोरयतीति इंदीवरदलप्रभाचोरम् । अनया किमभिप्रेतं किं वाञ्छते । अस्माकं मोहो गतः स्मरकुसुमबाणव्यतिकरज्वलज्ज्वाला शांता वराकी तदपि न विरमति विरामं न प्राप्तवती । एवं सति वैराग्ये कामिनीकटाक्षपातो निरर्थक इति भावः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६४ ॥

( भा० टी० ) यह बाला हमपै निरंतर नेत्रकटाक्ष क्यों चलाती है ? कैसा है वह नेत्र कि, इंदीवर जो कमल उसकी शोभाको चुरानेवाला है. इसकी इच्छा क्या है ? हमारा मोह तो निवृत्त हो गया और कामदेवके पुष्परूप बाणोंसे जलती हुई ज्वालाभी अब शांत हो गई. तथापि यह तुच्छ बराकी ( कौडी ) शांत नहीं होती !॥ ६४ ॥

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ।
किं तूद्भ्रान्तपतत्पतंगपवनव्यालोलदीपांकुर-
च्छायाचंचलमाकलय्य सकलं संतो वनांतं गताः ॥ ६५ ॥

(सं० टी०) पुरुषेण सर्वं अस्थिरस्थायिनं हर्म्यादिकं विहाय वनाश्रयणमेव कार्यमित्याह—रम्यमिति। सन्तः सत्पुरुषा वनांतं गताः। किमिति संभावनायाम्। तेषां वसतये निवासाय हर्म्यतलं रम्यं नाभूत्किम्। संतो वनांतं गता वनं सेवयामासुः। किंतूद्भ्रांतपतत्पतङ्गपवनव्यालोलदीपांकुरच्छायाचञ्चलं सकलं जीवलोके आकलय्य विचिंत्य हृदये ज्ञात्वा इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्। लक्षणं पूर्वोक्तम्॥ ६५॥

(भा० टी०) क्या अच्छे सुंदर मकान रहनेको नहीं थे? क्या सुननेको गायनादिक नहीं थे? प्रसन्न करनेको समागमसुख नहीं था? परंतु संतलोग उन सुखोंको जैसे बगूले उठनेसे दीपककी ज्योति चंचल होनेके कारण उसकी छाया स्थिर नहीं रहती, तैसे इस देहको अनित्य मान और एकांतवासको नित्य सुखकारी मानकर वनमें गये हैं!॥ ६५॥

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलेभ्यश्च शाखाः।
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि॥ ६६॥

(सं० टी०) विनायासेन कन्दकन्दरादिषु जीवसाधनेषु उपलब्धेषु सत्सु प्राणतर्पणार्थं खलाराधनं न कर्तव्यमित्याशयेनाह—किं कन्दा इति। यत्तु खलानां दुर्जनानां मुखानि वीक्ष्यन्ते विलोक्यन्ते। यत्तदोर्नित्यं सम्बन्धः। तत्कन्दरेभ्यः कन्दाः प्रलयमुपगताः क्षयं जग्मुः। वाऽथवा गिरिभ्यः पर्वतेभ्यः निर्झराः क्षयमुपगताः। वाऽथवा वल्कलेभ्यस्तरुभ्यः सरसशाखाः प्रध्वस्ता विनाशमुपजग्मुः। कथंभूताः शाखाः? सरसफलभृतः, सरसानि फलानि बिभ्रतीति। किं खलानां प्रसभं यथा भवति तथा अपगतप्रश्रयाणां प्रोल्लसद्गर्वाणाम्। किंभूतानि मुखानि दुःखोपात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि, दुःखेनोपात्तं उपार्जितं यदल्पवित्तं तस्य स्मयवशपवनेनासमंताद्भावेन नर्तिता भ्रूलता यैः तानि। स्रग्धरा वृत्तम्। लक्षणं पूर्वोक्तम्॥ ६६॥

(भा० टी०) पहाड़ोंकी कंदरासे क्या कन्द, मूल और पानीके झरने

नष्ट हो गए ? अच्छे फलवान् वृक्षोंके वल्कलवाली शाखा क्या ध्वस्त हो गई ? जो लोग अनम्र खल कि जिन्होंने बड़े कष्टसे कुछ धन उत्पन्न किया उसके गर्वरूपी वायुसे जिनके भौंहरूपी लता नाचती है उनका मुख देखते हैं ? ॥ ६६ ॥

गंगातरंगकणशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रलयं गतानि
यत्सावमानपरपिण्डरता मनुष्याः ॥ ६७ ॥

( सं० टी० ) परपिंडरतापेक्षया हिमवत्संबंधिवनाश्रयणं वरमित्याशयेनाह-गंगेति । मनुष्या यत्सावमानपरपिंडरता वर्तन्ते । तत्किं हिमवतः स्थानानि प्रलयं गतानि ? । किंभूतानि हिमवतः स्थानानि ? गङ्गातरङ्गकणशीकरशीतलानि । गंगायास्तरंगा गंगातरंगास्तेषां कणशीकरैः शीतलानि गंगातरंगकणशीकरशीतलानि, पुनः किंभूतानि स्थानानि ? विद्याधराध्युषितचारुशिलातलानि, विद्याधरैरध्युषितानि अधिष्ठितानि चारूणि शिलातलानि येषां तानि । एवंविधस्थानानि चेत् स्युस्तदा परतिरस्कारपिण्डरताः नराः किं भवेयुः । एतावता परावमानान्येव स्थानानि सश्रितानि । वसन्ततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६७ ॥

( भा० टी० ) गङ्गाकी तरंगोंके ठंढे ठंडे छीटोंसे जो शीतल हो रहे हैं और जहां विद्याधर ठौर ठौर सुंदर पत्थरोंकी चट्टानोंपर बैठे हैं ऐसे हिमाचलके स्थानोंका क्या प्रलय हो गया ? जो अपमान सहकेभी पराये दिये ग्रासमें मनुष्य रत रहते हैं ॥ ६७ ॥

यदा मेरुः श्रीमान्निपतति युगान्ताग्निनिहतः
समुद्राः शुष्यंति प्रचुरनिकरग्राहनिलयाः ।
धरा गच्छत्यन्तं धरणिधरपादैरपि धृता
शरीरे का वार्ता करिकलभकर्णाग्रचपले ॥ ६८ ॥

( सं० टी० ) शरीरे नैवास्था कर्तव्या इत्याशयेनाह-यदेति । यदा श्रीमान्मेरुः युगांताग्निहतो निपतति । समुद्राः शुष्यंति । किंभूताः समुद्राः

प्रचुरनिकरग्राहनिलयाः, प्रचुराश्च ते निकराः समूहाः ग्राहास्तेषां ग्राहाणां जलचरजीवानां निलयाः येषु ते प्रचुरनिकरग्राहनिलया अपि । पुनः धरा वसुन्धरा अन्तं गच्छति । किम्भूता धरा ? धरणिधरपादैर्धृता अवलम्बितापि तदा शरीरे का वार्ता । किम्भूते शरीरे ? करिकलभकर्णाग्रचपले करिकलभानां गजशावकानां कर्णाग्रवच्चपलं चञ्चलं तस्मिन् । शिखरिणीवृत्तम् । लक्षणं पूर्वोक्तम् ॥ ६८ ॥

( भा० टी० ) प्रलयकालकी अग्निका मारा हुआ जब श्रीमान् सुमेरुपर्वत गिर पडता है, और बड़े बडे मगर और ग्राहोंके स्थान समुद्र जब सूख जाते हैं, और पर्वतोंके पगसे दबी हुई पृथ्वीभी नाश हो जाती है, तब हाथीके बच्चोंके कानके कोरकी नाईं चंचल जो मनुष्यशरीर उसकी क्या गणना है ? ॥ ६८ ॥

एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बरः ।
कदा शम्भो ! भविष्यामि कर्मनिर्मूलनक्षमः ? ॥ ६९ ॥

( सं० टी० ) संसारदुःखहेतुभूतानि अनेकानि कर्माण्याचरन्नतिखिन्नः कश्चित्पुरुषः विरक्तिपूर्वकं कर्मनिर्मूलनसामर्थ्यं प्रार्थयन्नाह-एकाकीति । हे शम्भो ! अहं तादृशः कदा भविष्यामि ? । कथंभूतोऽहम् ? एकाकी अद्वितीयः । पुनः किम्भूतः ? निःस्पृहः । पुनः किंभूतः ? शांतः । पुनः किंभूतः ? पाणिः पात्रं भाण्डं यस्य सः । पुनः कथंभूतः ? दिगंबरः दिश एव अम्बरं वस्त्रं यस्याऽसौ । पुनः किंभूतः? कर्मनिर्मूलनक्षमः कर्मणां निर्मूलनं कर्मनिर्मूलनं तत्र क्षमः कर्मनिर्मूलनक्षमः एवंभूतः कदा भविष्यामि ? । वृत्तमनुष्टुप् । लक्षणं पूर्वोक्तम् ॥ ६९ ॥

( भा० टी० ) हे शिव ! असंग, इच्छारहित और शान्तरूप हाथहीका पात्र बनाय, दिगंबर और कर्मोंकी जड उखाड़नेमें समर्थ ऐसे हम कब होंगे ? ॥ ६९ ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सम्मानिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ७० ॥

( सं० टी० ) प्राप्ता इति । श्रियो लक्ष्म्यः प्राप्तास्ततः किम् । किम्भूताः श्रियः ? सकलकामदुघाः सर्वमनोरथदोग्ध्र्यः । विद्विषां शिरसि मस्तके पदं दत्तं ततः किम् । प्रणयिनस्ते हिताः विभवैः धनैः सम्मानितास्ततः किम् । तनुभृतां प्राणिनां तनुभिः कल्पं स्थितं ततः किम् । एतस्य निर्ममतैव वरम् । वसन्ततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७० ॥

( भा० टी० ) इन नश्वर शरीरधारियोंने कामधेनुसी लक्ष्मी पाई तो उससे क्या ? शत्रुओंके शिरपर पग दिया तो क्या ? धनसे मित्रोंका सन्मान किया तो क्या ? और इस देहसे कल्पभर जिए तो उससे क्या ? अर्थात् परलोक न बनाया तो कुछ न किया ! ॥ ७० ॥

जीर्णा कंथा ततः किं सितममलपटं पट्टसूत्रं ततः किं
एका भार्या ततः किं हयकरिसुगणैरावृतो वा ततः किम् ।
भक्तं भुक्तं ततः किं कदशनमथवा वासरांते ततः किं
व्यक्तज्योतिर्न वांतर्मथितभवभयं वैभवं वा ततः किम् ॥७१॥

( सं० टी० ) जीर्णेति । जीर्णा कन्था लब्धा ततः किम् । सितं शुभ्रं अमलं स्वच्छं पटं वस्त्रं वा पटसूत्रं दुकूलादिकं ततः किम् । एका अद्वितीया भार्या पत्नी ततः किम् । हया अश्वाः करिणो गजाश्च तेषां शोभना गणाः समूहास्तैरावृतो व्याप्तो वा ततः किम् । भक्तमोदनं भुक्तं ततः किम् । 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः' इत्यमरः । अथवा वासरान्ते दिनान्ते कदशनं कुत्सितभोजनं ततः किम् । तथा व्यक्तं प्रत्यक्षं ज्योतिर्ब्रह्म यस्मिंस्तथाविधं मथितं भवभयं संसारभयं येन अंतर्हृदि वैभवं ऐश्वर्यं न ततः किम् । स्रग्धरा वृत्तम् ॥ ७१ ॥

(भा० टी०) पुरानी गुदडी धारण की तो क्या अथवा उज्वल निर्मल वस्त्र वा पीतांबर धारण किया तो क्या ? एकही उत्तम स्त्री पास रही तो क्या अथवा घोडे हाथीसहित करोड स्त्रियां रहीं तो क्या ? अच्छे व्यंजन भोजन किए वा कुत्सित अन्न सायंकालको खाया तो क्या ? जिससे भवभय नष्ट हो जाय ऐसी ब्रह्मकी ज्योति हृदयमें न जानी तो बडा विभव पाया ही तो उससे क्या होगा ? ॥ ७१ ॥

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु न मन्मथजा विकाराः ।
संसर्गदोषरहिता विजना वनान्ता
वैराग्यमस्ति किमतः परमार्थनीयम्[1] ॥ ७२ ॥

( सं० टी० ) अचादीनामतितुच्छत्वाद्बुध्वा भक्त्यादिपुरःसरं वैराग्यमेवाकलनीयमित्याशयेनाह–भक्तिरिति । अतः परं किं वैराग्यमस्ति । तत्किं भक्तिर्भवे महेशे । अन्यच्च हृदिस्थं प्राणिनामंतःस्थं मरणजन्मभयम् । अन्यच्च बंधुषु स्नेहो न । अन्यच्च मन्मथजाः कामोद्भवा विकारा न । अन्यच्च वनांताः विजनाः जनरहिताः । पुनः किंभूताः वनांताः ? संसर्गदोषराहिताः, संसर्गाद्दोषः संसर्गदोषस्तेन रहिताः संसर्गदोषरहिताः । अतः परं वैराग्यं किमपि नास्ति । किम्भूतं वैराग्यम् ? परमार्थनीयं परमतत्त्वयुतम् । वसन्ततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७२ ॥

( भा० टी० ) सदाशिवकी भक्ति हो, जन्म मरणका भय हृदयमें न हो, बन्धुवर्गमें स्नेह न हो, कामदेवका विकार मनसे दूर हो, संसर्गदोषसे छूटे निर्जन वनमें बैठे हों और सबसे वैराग्य हो, फिर कहो इससे अधिक परमार्थतत्वयुक्त वैराग्य क्या है ? ॥ ७२ ॥

तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ।
यस्यानुषंगिण इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥ ७३ ॥

( सं० टी० ) विषयवासनात्यागपूर्वकं अजरं प्रकाशमानं ब्रह्म तच्चिंतनमेव कल्याणकरं नान्यदिति चित्तं प्रति बोधयन्सन् श्लोकद्वंद्वेनाह–तस्मादिति । हे जनाः, यदि यूयं चेतनाः स्थः तत्तस्माद्ब्रह्म वाञ्छत । कथंभूतं ब्रह्म ? । अन्तरहितं अजरं जरावर्जितम् । पुनः किंभूतं ब्रह्म ? परमं विकासि यस्य परब्रह्मणः कृपणलोकानां मता मान्या इमे भुवनाधिपत्यभोगादयः पदार्था-

---

१ 'परमर्थनीयम्' इति पाठांतरम् ।

अनुषङ्गिणः अनुयायिनो भवन्ति । तर्हि एभिः असद्विकल्पैः देहभावादिविकल्पैः किम् । वसन्ततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७३ ॥

( भा० टी० ) जिस ब्रह्मके लेशमात्र आनन्द पानेवालोंके निकट त्रिभुवनके राजका भोग विलास मूर्खोंके योग्य ठहरता है, अतएव उसी अनन्त, अजर और सर्वोत्तम शोकरहित ब्रह्मका चिंतवन करो. इन विकल्पोंसे क्या लाभ हो सक्ता है ? ॥ ७३ ॥

पातालमाविशसि यासि नभो विलंघ्य
दिङ्मण्डलं भ्रमसि मानसचापलेन ।
भ्रान्त्याऽपि जातु विमलं कथमात्मनीनं
तद्ब्रह्म न स्मरसि निर्वृतिमेषि येन ॥ ७४ ॥

( सं० टी० ) पातालमिति । रे मूढ ! पातालमाविशसि । अन्यच्च नभः आकाशं विलंघ्य यासि । अन्यच्च दिङ्मण्डलं भ्रमसि । केन मानसचापलेन मानसस्य चापलं तेन जातु कदाचित् भ्रांत्या आत्मनीनं आत्मनि हितं विमलं निर्मलं तद्ब्रह्म कथं न स्मरसि । येन ब्रह्मणा निर्वृतिमेषि मुक्तिं प्राप्नोषि । वसन्ततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७४ ॥

( भा० टी० ) हे चित्त ! तू अपनी चंचलतासे पातालमें प्रवेश करता है, आकाश उल्लंघकर ऊपर जाता है, और सब दिशाओंमें भ्रमण करता है, पर भूलेभी कदाचित् अपने हृदयमें स्थित विमल ब्रह्मको नहीं स्मरण करता है कि जिसके स्मरणसे परमानन्दको प्राप्त हो ॥ ७४ ॥

रात्रिः सैव पुनः स एव दिवसो मत्वा बुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः ।
व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना
संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ ७५ ॥

( सं० टी० ) कस्यचित्संसारसंबंधिकव्यापारैः खिन्नपुरुषस्य उक्तिरित्याह—रात्रिरिति । अहो इति दुःखे । अमुना एवंविधेन संसारेण कदर्थिताः मोहान्मौढ्यात्कथं न लज्जामहे । कैः ? व्यापारैः । किंभूतैः व्यापारैः ? पुनरुक्तभुक्तविषयैः,

पुनर्विहितानि पुनरुक्तानि यानि भुक्तानि भोजनानि । अन्यच्च विषयाः । पुनः पुनरुक्ताः तैर्बुधाः पण्डिताः । जंतवः प्राणिनः उद्यमिनः उद्यमवंतो धावंति । किंभूताः जंतवः ? तथैव पुनः पुनः निभृतप्रारब्धतत्तत्क्रियाः, वारं वारं निभृताः प्रारब्धास्तत्तत्क्रिया यैस्ते । किं कृत्वा ? तां रात्रिं मत्वा । चान्यत्पुनस्तथैव दिवसं मत्वा ज्ञात्वा । यतः । "पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपि मासाः । पुनरप्ययनं पुनरपि वर्षं" इत्यादि, अन्यच्च "पुनरपि वृद्धः पुनरपि बालः पुनरपि याति समेधितकालः" एवंविधं कालस्य स्वरूपं ज्ञात्वा । तस्मात्संसाराद्विरक्तिरेव न भवतीति व्रीडा । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७५ ॥

( भा० टी० ) वेही रात दिन नित्य होते हैं. इसप्रकार कालका स्वरूप जानकेभी निर्बुद्धि उद्योगी उठ उठ अपने धारित प्रारब्धकी प्रेरणासे उन उन क्रियाओंमें दौडते हैं. ऐसेही प्रतिदिन औरोंके कहे अनुसार जिन्होंने विषयभोग किया है ऐसे व्यापारसे फँसेहुए इस संसारमें हमभी क्लेशित हैं; पर मोहसे अटके हैं, लज्जित नहीं होते अर्थात् त्याग नहीं करते ! ॥७५॥

मही रम्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ७६ ॥

( सं० टी० ) वैराग्ययुक्तपुरुषस्य नृपतेश्च साम्यमाह-महीति । शांतो मुनिः सुखं यथा भवति तथा शेते । यस्य मुनेः मही पृथ्वी शय्या शयनम् । यस्य मुनेर्विपुलं उपाधानं भुजलता । चान्यद्वितानं आकाशम् । व्यजनमनुकूलः शीतलः पवनः । व्यजनं तालवृंतम् । चान्यच्चन्द्रः स्फुरद्दीपः । चान्यद्विरतिवनितासंगं प्रति उदितः मुनिः ? क इव ? नृप इव ? यथा नृपः । मही शय्या । पृथ्वीशयनशय्यो भवति । अन्यच्च विपुलोपधानो भवति विस्तीर्णगण्डुको भवति । चान्यदाकाशं प्रति मस्तकोपरि वितानं भवति । चान्यद्व्यजनानिलेन वीजितो भवति । अन्यच्च स्फुरद्दीपो भवति । अन्यच्च वनितासंगं प्रति उदितो भवति । किंभूतो मुनिः ? चान्यनृपः अतनुभूतिः अतन्वी भूतिर्विभूतिर्यस्य । पक्षे लक्ष्मीरिति । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७६ ॥

 

( भा० टी० ) भूमि ही जिसकी सुन्दर शय्या है, भुजाही सिरहानी, आकाशही चँदवा, अनुकूल वायुही पंखा और चंद्रमाही प्रकाशमान दीपक है; इन सामग्रियोंसे विरक्ततारूपी स्त्रीके संग आनन्दसे शान्त योगी पुरुष सुखपूर्वक बड़े ऐश्वर्यवान् राजाओंकी नाईं सुखसे शयन करते हैं ॥ ७६ ॥

त्रैलोक्याधिपतित्वमेव विरसं यस्मिन्महाशासने
तल्लब्ध्वाऽऽसनवस्त्रमानघटने भोगे रतिं मा कृथाः ।
भोगः कोऽपि स एक एव परमो नित्योदितो जृम्भते
यत्स्वादाद्विरसा भवन्ति विषयास्त्रैलोक्यराज्यादयः ॥ ७७ ॥

( सं० टी० ) त्रैलोक्येति । हे आत्मन् ! तत्परब्रह्म लब्ध्वा भोगे रतिं मा कृथाः । यस्मिन्परब्रह्मणि एव निश्चयेन त्रैलोक्याधिपतित्वं विरसं वर्तते । किंभूते भोगे ? आसनवस्त्रमानघटने । आसनं सिंहासनसुखासनादि, वस्त्राणि चीरांशुकपट्टदुकूलादीनि, मानो महत्त्वास्तित्वमानादिः, तेषां घटनं आसनवस्त्रमानघटनं तस्मिन् । एवंविधे भोगे का रतिः कोऽपि संभोगः एक एव परमो नित्योदितः सन् उज्जृंभते । यत्स्वादात् यस्य ब्रह्मणो रसास्वादात् त्रैलोक्यराज्यादयो विषया विरसा भवन्ति मोक्षदायकत्वादित्यर्थः । शार्दूलविक्रीडितं वृत्तम् लक्षणं पूर्वोक्तम् ॥ ७७ ॥

( भा० टी० ) जिस महावाक्य अर्थात् ब्रह्मज्ञानके आगे त्रैलोक्यका राज्य फीका हो जाता है, उसे प्राप्त होकर भोजन वस्त्र और मानके रुचिवाले भोगोंमें प्रीति मत करो. वही एक भोग सबसे श्रेष्ठ और नित्य उदित अर्थात् प्रकाशित है, कि जिसके स्वादके सन्मुख त्रैलोक्यराज्यादि सब ऐश्वर्य निरस हो जाते हैं ॥ ७७ ॥

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवबन्धदुःखरचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥ ७८ ॥

( सं० टी० ) सर्वान्सांसारिकव्यापारान्हित्वा एकं ब्रह्मप्राप्तिसाधनीभूतं व्यापारमेवाकलनीयमिति द्योतयन् श्लोकयुग्मेनाह–किमिति । वेदैः किम् । पुराणपठनैः किम् । शास्त्रैर्महाविस्तरैः महान् विस्तरो येषां तानि तैः किम् । कर्मक्रियाविभ्रमैश्च किम् । किंभूतैः ? स्वर्गग्रामकुटीनिवासफलदैः, स्वर्गग्रामस्य कुटी स्वर्गग्रामकुटी तस्यां निवासफलं ददतीति स्वर्गग्रामकुटीनिवासफलदाः तैः । एकं स्वात्मानन्दपदप्रवेशकलनं स्वकीयो योऽसौ आत्मा स्वात्मा तस्य यदानन्दपदं स्वात्मानन्दपदं स्थानं तस्मिन् यः प्रवेशः तस्य कलनं ज्ञानम् । पुनः कथंभूतम् भवबन्धदुःखरचनाविध्वंसकालानलं, भवस्य संसारस्य यो बन्धः तस्य यानि दुःखानि तेषां विध्वंसो नाशः तद्विषये कालानलं प्रलयाग्निं एतादृशं एकं ज्ञानं मुक्त्वा त्यक्त्वा । शेषैः वेदादिभिः किम् ? न किमपीत्यर्थः । शेषाः क्रिया वणिग्वृत्तयो वणिगाचाराः भवन्तीति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७८ ॥

( भा० टी० ) श्रुति, स्मृति, पुराण और बड़े विस्तारपूर्वक शास्त्रोंके पढ़नेसे क्या ? और स्वर्गरूपी जो ग्राम है तिसमें कुटी बनाके रहना इतनाही जिसका फल है ऐसे कर्मकांडकी कर्तव्यताके विभ्रमसे क्या ? संसारबंधनके दुःखोंकी रचनाका विध्वंस करनेके हेतु प्रलयाग्निके सदृश ब्रह्मानंदपदमें प्रवेशके उद्योगबिना और बाकी सब वणिजव्यापार है ७८

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-
रर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूराः ।
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥७९॥

( सं० टी० ) आयुरिति । हे उत्तमाः ! ब्रह्मणि परब्रह्मणि आसक्तचित्ता भवत यूयम् । किं कर्तुम् ? भवभयाम्भोधिपारं तरीतुं, भवभयांभोधेः पारः भवभयाम्भोधिपारस्तम् । शेषं समस्तमस्थिरम् । किं किम् ? आयुःकल्लोललोलं समुद्रकल्लोलचपलम् । यौवनश्रीः कतिपयदिवसस्थायिनी कतिपयदिवसान् स्थातुं शीलमस्याः सा कतिपयदिवसस्थायिनी । अर्थाः संकल्पकल्पाः संकल्पतुल्याः । भोगपूराः घनसमयतडिद्विभ्रमाः, घनसमयतडिद्वत् विभ्रमो येषां ते घनसमयतडिद्विभ्रमाः । प्रियाभिः प्रणीतं यत्कण्ठाश्लेषोपगूढं तदपि च न चिरम् । तस्मात्कारणात् परं ब्रह्म एव शाश्वतमिति भावः । स्रग्धरा वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ७९ ॥

( भा० टी० ) आयु जलतरंगसी चंचल है, यौवनअवस्थाकी शोभा अल्पकाल रहनेवाली है, धन मनके संकल्पसेभी क्षणिक है, भोगके समूह वर्षाकालके मेघकी बिजलीसे चंचल हैं और प्यारी स्त्रीको गलेसे लगाना बहुत दिन स्थिर नहीं रहता; इसलिये संसारके भयरूपी समुद्रसे पार हुआ चाहो तो ब्रह्ममें चित्त लीन करो ॥ ७९ ॥

ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः ।
शफरीस्फुरितेनाब्धेः क्षुब्धता जातु जायते ॥ ८० ॥

( सं० टी० ) मनस्वी विवेकवान्पुरुषो लोभाद्यासक्तो न भवतीत्याह—ब्रह्माण्डमिति । मनस्विनो जितेंद्रियस्य ब्रह्माण्डमंडलीमात्रं किं लोभाय जायते अपि तु न । ब्रह्माण्डस्य मंडली ब्रह्माण्डमंडली सैव मात्रा यस्य तत् । अब्धेः समुद्रस्य शफरीस्फुरितेन मत्स्यिकावल्गितेन जातु कदाचित् क्षुब्धता क्षोभता जायते, अपि तु न । तथा मनस्विनः पुरुषस्य ब्रह्माण्डमंडलीमात्रं लोभाय न जायते । अनुष्टुप् वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८० ॥

( भा० टी० ) मनस्वी अर्थात् ब्रह्मविचारवान्के लुभानेको ब्रह्मांडमण्डल तुच्छ है; मछलीके उछलनेसे समुद्र नहीं उमगता. तात्पर्य यह कि, ब्रह्मज्ञानीका चित्त समुद्रवत् गंभीर है, त्रैलोक्यकी संपत्ति उसके आगे छोटी मछलीके समान है ॥ ८० ॥

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदादृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म तनुते ॥ ८१ ॥

( सं० टी० ) विचारवान्पुरुषः सर्वत्र ब्रह्म मनुत इत्याह—यदेति । यदा यस्मिन् प्रस्तावे अज्ञानं आसीत्तदा इदमशेषं जगदपि मया नारीमयं दृष्टम् । किंभूतमज्ञानम् स्मरतिमिरसंस्कारजनितं, स्मरस्य कन्दर्पस्य यत्तिमिरं अंधकारं तस्य संस्कारेण पूर्वभवोद्भवपरिणामेन जनितम् । इदानीं सांप्रतं अस्माकं समीभूता दृष्टिः समतापरिणामेनालंकृतं चेतः त्रिभुवनमपि ब्रह्म तनुते पर-

ब्रह्मस्वरूपं विस्तारयति । किंभूतानामस्माकम् ? पटुतरविवेकाञ्जनजुषां प्रकृष्टपटुर्योऽसौ विवेकः पटुतरविवेकः पटुतरविवेक एवांजनं जुषन्ति ते पटुतरविवेकांजनजुषस्तेषाम् । अथ यथास्थितसंसारस्य स्वरूपं पश्यामः । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८१ ॥

( भा० टी० ) कामदेवके अंधकारके संस्कारसे जनित ( उत्पन्न ) जो अज्ञान तिससे यह सब जगत् स्त्रीमय देखनेमें आता था, इस समयमें पटुतर विवेकरूप अंजन लगानेसे दृष्टि स्वच्छ हो गई, तिससे सब जगत् ब्रह्ममय दीख पडता है ॥ ८१ ॥

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तःस्थली
रम्यः साधुसमागमः शमसुखं काव्येषु रम्याः कथाः ।
कोपोपाहितबाष्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामुपगते चित्ते न किंचित्पुनः ॥ ८२ ॥

( सं० टी० ) अस्थिरचित्ते सति सकलमपि वस्तु अरम्यमिव भात्यतः चित्तस्थैर्यमेव सम्पादनीयमित्याह-रम्या इति । चंद्रमरीचयो रम्याः । वनांतःस्थली रम्या । किंभूता वनान्तःस्थली ? तृणवती शाद्वला । साधुसमागमो रम्यः । शमसुखं रम्यम् । काव्येषु कथा रम्याः । अन्यच्च प्रियाया मुखं रम्यम् । किम्भूतं मुखम् कोपोपाहितबाष्पबिन्दुतरलं, कोपोपाहितः कोपेन निवेशितः यो बाष्पबिंदुस्तेन तरलं चञ्चलम् । पुनः अनित्यतामुपगते संप्राप्ते चित्ते सर्वं न किञ्चित् रम्यम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८२ ॥

( भा० टी० ) चन्द्रमाकी किरणें भली लगती थीं, हरित तृणवाली वनभूमि सुहावनी देख पडती थी, मित्रोंका समागम अच्छा लगता था, शृंगाररसवाली काव्यकथा प्यारी जान पडती थी, क्रोधके आंसुओंके बूँदसे चंचल और मनभावन प्यारीका मुख सुंदर लगता था; पर जब संसारकी अनित्यता निश्चित हुई तब वह सब चित्तसे जाता रहा ॥ ८२ ॥

भिक्षाशी जनमध्यसंगरहितः स्वायत्तचेष्टः सदा
दानादानविरक्तमार्गनिरतः कश्चित्तपस्वी स्थितः ।

रथ्याक्षीणविशीर्णजीर्णवसनैः संप्राप्तकन्थासखो
निर्मानो निरहंकृतिः शमसुखाभोगैकबद्धस्पृहः ॥ ८३ ॥

( सं० टी० ) अस्मिञ्जगति निर्मानोऽहंकाररहितो जनः दुर्लभ इत्याह–भिक्षाशीति । एवंविधस्तपस्वी जनः कश्चिद्विरलः स्थितो वर्तते । कीदृशो जनः ? भिक्षाशी भिक्षाभोजनः । पुनः कीदृशः ? जनमध्यसंगरहितः । पुनः कीदृशः ? सर्वदा स्वायत्तचेष्टः स्वाधीनमानसपरिणामः । पुनः कीदृशो जनः ? दानादानविरक्तमार्गनिरतः, दानं चादानं च दानादाने तयोर्विरक्तमार्गे निरतः । पुनः कीदृशः ? रथ्याक्षीणविशीर्णजीर्णवसनैः संप्राप्तकंथासखः रथ्यायां क्षीणानि विशीर्णानि जीर्णानि च यानि वसनानि तैः कृत्वा संप्राप्ता कंथा सखी सहायिनी येन सः । पुनः कीदृशो जनः ? निर्मानः । पुनः कीदृशः ? निरहंकृतिर्निरहंकारः । पुनः कीदृशो जनः ? शमसुखाभोगैकबद्धस्पृहः शमस्य सुखं शमसुखं तस्याभोगे विस्तारे एका बद्धा स्पृहा येन सः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८३ ॥

( भा० टी० ) भीख मांगके खाना, लोगोंके मध्यमें असंग रहना, स्वाधीन चेष्टा करना, देने और न देनेसेभी निवृत्तिमार्गमें रत रहना, मार्गमें पडे फटे पुराने वस्त्रके टुकड़ेकी गुदड़ी पहिराना, मान और अहंकारसे रहित होना, शमसुख अर्थात् ब्रह्मानन्दहीमें इच्छा रखना, इसप्रकारसे कोई विरलाही तपस्वी स्थित रहता है ॥ ८३ ॥

मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल
भ्रातर्व्योम निबद्ध एवभवतामेष प्रणामाञ्जलिः ।
युष्मत्संगवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ ८४ ॥

( सं० टी० ) संसारसुखाद्विरक्तः कश्चित्पुरुषो भूम्यादिपंचमहाभूतेषु मातृत्वादिकं परिकल्प्य तान्प्रति प्रार्थयते–मातरिति । मातः हे मेदिनि ! हे तात मारुत ! हे सखे तेजः ! हे सुबंधो जल ! हे भ्रातर्व्योम ! भवतां पंचतत्त्वानामेष प्रणामांजलिः बद्धोऽस्ति । तथा भवद्भिः सर्वैर्मिलित्वा विधेयम् ।

१ 'कन्थाधर' इति पाठान्तरम् ।

यथाऽहं परे ब्रह्मणि लीये लीनो भवामि । कथंभूतोऽहम् ? युष्मत्संगवशोपजात-सुकृतोद्रेकस्फुरन्निर्मलज्ञानापास्तसमस्तमोहमहिमा, युष्माकं संगवशस्तेन उपजातो योऽसौ सुकृतोद्रेकस्तस्मात्स्फुरता निर्मलज्ञानेन अपास्तो निराकृतः समस्तो मोह-महिमा येन सः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८४ ॥

( भा० टी० ) हे माता पृथ्वी ! हे पिता वायु ! हे सखा तेज ! हे बन्धु जल ! और हे भाई आकाश ! तुम्हें हाथ जोड़ अन्तसमय प्रणाम करता हूं सो तुम्हारे संगसे पुण्य उदय होनेसे ज्ञान निर्मल हुआ और ज्ञान निर्मल होनेसे मोहमहिमा दूर हुई. अब हम परब्रह्ममें लीन होते हैं अर्थात् पृथ्वी आदि पंचतत्त्वरचित देहको ब्रह्मज्ञानमें सहायक समझकर प्रणाम करते हैं; क्योंकि, फिर तुमसे भेंट न होगी ! ॥ ८४ ॥

यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
प्रोद्दीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः ? ॥८५॥

( सं० टी० ) यावदिति । विदुषा पंडितेन आत्मश्रेयसि मोक्षे तावदेव महान्प्र-यत्नः कार्यः । यावदिदं कलेवरगृहं शरीरमंदिरं च स्वस्थं वर्तते समाधानप-रायणं वर्तते । चान्यद्यावत् जरा दूरे वर्तते । अन्यदिंद्रियशक्तिः । अप्रतिहता वर्तते चान्यद्यावदायुषः क्षयो नास्ति । तावदेव स्वहिते यत्नः कार्यः । भवने गृहे प्रकर्षेण उद्दीप्ते सति निश्चितं कूपखननं प्रत्युद्यमः कीदृशः ? । नहि गृहे प्रदीप्ते सति कूपः खनितुं शक्यते । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८५ ॥

( भा० टी० ) जबतक अपना शरीर पुष्ट और नीरोग है और वृ-द्धावस्था दूर है, जबलों इंद्रियोंकी शक्ति न्यून न हुई और आयुष्यभी क्षीण नहीं हुआ है तबतक बुद्धिमान् पुरुषको उचित है कि, अपने कल्याणका यत्न अच्छी भांतिसे कर लेवे. जब घर जलने लगे तभी कूप खोदनेके उद्योगसे क्या होगा ? ॥ ८५ ॥

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ८६ ॥

( सं॰ टी॰ ) नेति । भुवि पृथिव्यां विद्या न अभ्यस्ता । किंभूता विद्या ? वादिवृंददमनी । पुनः किम्भूता विद्या ? विनीतोचिता, विनयवतः पुरुषस्य योग्या । खड्गाग्रैः कृपाणधाराभिः यशो नाकं स्वर्गलोकं प्रति न नीतम् । कीदृशैः खड्गाग्रैः करिकुंभपीठदलनैः, करिणां कुंभपीठदलने शीलं येषां ते तथा तैः चान्यच्चंद्रोदये कांताकोमलपल्लवाधररसो न पीतः । अहो इति खेदे । तारुण्यं यौवनं निष्फलमेव गतम् । किंवत् ? शून्यालये दीपवत् । एवं पुरुषस्यायुर्व्यर्थं गतमिति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८६ ॥

( भा॰ टी॰ ) नम्रजनोंकी प्रसन्नताके योग्य और वादियोंके समूहको दमन करनेहारी विद्याका अभ्यास हमने न किया और तरवारकी धारसे हाथीके मस्तकका पृष्ठभाग काटनेवाला स्वर्गलों अपना यश न पहुँचाया और चांदनी रातमें सुन्दर स्त्रीके कोमल अधरपल्लवका रसभी न पान किया, तो इस भूमिपर हमारी युवाअवस्था यों बीती, जैसे शून्य मंदिरमें दीपक जलकर ठंढा हो जाय ॥ ८६ ॥

ज्ञानं सतां मानमदादिनाशनं
केषांचिदेतन्मदमानकारणम् ।
स्थानं विविक्तं यमिनां विमुक्तये
कामातुराणामतिकामकारणम् ॥ ८७ ॥

( सं॰ टी॰ ) ज्ञानमिति । सतां सत्पुरुषाणां ज्ञानं सच्छास्त्रजन्यं मानमदादिनाशनं भवति । केषांचिदधमानां एतज्ज्ञानं मदमानकारणं भवति । उक्तमेवार्थं कविर्दृष्टांतेन दृढयति । यमिनां मुनीनां विविक्तं स्थानं एकांतप्रदेशः विमुक्तये भवति संसारच्छेदनाय स्यात् । कामातुराणां पुरुषाणां विविक्तं जनरहितं अतिकामकारणं भवति कामविकाराय स्यात् । इंद्रवंशा वृत्तम् । “ स्यादिंद्रवंशा ततजैरसंयुतैः ” इति लक्षणात् ॥ ८७ ॥

( भा० टी० ) जो ज्ञान सत्पुरुषोंके मानमदादि नष्ट करनेका हेतु होता है वही ज्ञान दुर्जनोंको मद मान उत्पन्न करता है. जैसे एकांतस्थान संयमी पुरुषोंको मुक्तिसाधनका हेतु होता है और कामातुरोंको कामसाधनका कारण होता है! ॥ ८७ ॥

जीर्णा एव मनोरथाः स्वहृदये यातं जरां यौवनं
हन्तांगेषु गुणाश्च वंध्यफलतां याता गुणज्ञैर्विना ।
किं युक्तं सहसाऽभ्युपैति बलवान् कालः कृतांतोऽक्षमी
ह्याज्ञातं स्मरशासनांघ्रियुगलं मुक्त्वाऽस्ति नान्या गतिः ॥८८॥

( सं० टी० ) मानसिकव्यापारांस्त्यक्त्वा शिवाराधनमेव सर्वदा कर्तव्यमित्याशयेनाह-जीर्णा इति । मनोरथाः स्वहृदये जीर्णा एव । यौवनं जरां प्राप्तम् । हंतेति खेदे । चान्यद्गुणा वन्ध्यफलतां गुणज्ञैर्विना याताः । अक्षमी क्षमारहितः कृतांतः कृतः अंतो येन स कृतांतः, बलवान् कालो यमः सहसाऽभ्युपैति । अतः किं युक्तमुचितम् । ईदृग्दशायां किं कर्तव्यमिति यावत् । पुनर्निश्चित्याह । हि निश्चितं, आसमंतात् भावेन ज्ञातम् । त्रिपुरांतकांघ्रियुगलं मुक्त्वा अन्या गतिर्नास्ति । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ८८ ॥

( भा० टी० ) सब मनोरथ हृदयहीमें जीर्ण हो गए, कोईभी सिद्ध न हुआ; युवाअवस्था व्यतीत हुई तथा वृद्धावस्था आई और गुणभी गुणग्राहक विना निष्फल हो गए. अब सर्वनाशक बलवान् काल सहसा कर निकट चला आता है. क्या करना चाहिये ? फिर कहते हैं, अब जान लिया कि, कामनाशक शिवजीके दोनों चरण छोड़ और कोई गति नहीं है ॥८८॥

तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि
क्षुधार्तः सन् शालीन् कवलयति शाकादिवलितान् ।
प्रदीप्ते कामाग्नौ सुदृढतरमाश्लिष्यति वधूं
प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ॥ ८९ ॥

( सं० टी० ) कष्टसाध्ये पारमार्थिकसुखे सुखत्वधीमकृत्वा तृष्णादिशान्तौ सुखं मन्यमानं पुरुषं निंदति-तृषेति । प्राणी सलिलं पानीयं पिबति ।

क सति ? आस्ये वदने तृषा शुष्यति सति। किंभूतं सलिलम् ? स्वादु सुरभि च। प्राणी क्षुधार्तः सन् शालीन् कवलयति। कीदृशान् शालीन् ? शाकादिवलितान्। किंभूतः प्राणी ? कामाग्नौ प्रदीप्ते सति सुदृढतरं यथा भवति तथा वधूं भार्यामाश्लिष्यति आलिंगति। एवं जनः प्राणी व्याधेः प्रतीकार उपचारः सुखमिति विपर्यस्यति विपर्यासं करोति। शिखरिणी वृत्तम्। लक्षणं पूर्वोक्तम् ॥ ८९ ॥

( भा० टी० ) जब मनुष्यका कंठ प्याससे सूखने लग जाता है, तब शीतल सुगंधित सुंदर जल पीता है; जब क्षुधासे पीडित होता है तब शाकादि सामग्रीके साथ भोजन करता है; जब कामदेवकी अग्नि प्रचंड होती है, तब सुन्दर स्त्रीको हृदयसे लगाता है; विचारो तो यह एक व्याधिकी औषधि है; परन्तु मनुष्योंने इसे उलटाही सुख समझ लिया है ! ॥ ८९ ॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो ! त्वां
ध्येये ध्यानं नियोज्य क्षितिधरकुहरग्रावपर्यंकमूले ।
आत्मारामः फलाशी गुरुवचनरसस्त्वत्प्रसादात्स्मरारे !
दुःखान्मोक्ष्ये कदाऽहं तव चरणरतो ध्यानमार्गैकप्रश्नः ॥ ९० ॥

( सं० टी० ) उदरभरणार्थं राजादिसेवया खिन्नः कश्चिदितरसेवा न कर्तव्येतीतराञ्छिक्षयन्नाह–स्नात्वेति। हे स्मरारे कामनाशक ! कदा दुःखान्मोक्ष्ये। किं कृत्वा ? गांगैः पयोभिः स्नात्वा। हे विभो ! चान्यत् त्वां शुचीनि कुसुमानि पुष्पाणि फलानि च तैरर्चयित्वा। क्षितिधरस्य पर्वतस्य कुहरं दरी तस्या यो ग्रावा पाषाणः स एव पर्यंकः शय्या तस्याः मूले ध्येये ध्यातुं योग्ये ध्यानं नियोज्य योजयित्वा। आत्मारामः सन् फलाशी त्वत्प्रसादाद्गुरुवचनरतः ध्यानमार्गैकप्रश्नः तव चरणरतः स्थितः। स्रग्धरा वृत्तम्। लक्षणं पूर्वोक्तम् ॥ ९० ॥

( भा० टी० ) हे स्वामी ! हे कामदेवके शत्रु शिवजी ! गंगाजलसे मैं स्नान कर सुन्दर पवित्र फूलफलोंसे तुम्हें पूजकर पर्वतकी कंदरामें पत्थरकी चट्टानकी शय्यापर बैठ ध्यानयोग्य तुम्हारी मूर्तिमें ध्यानावस्थित

हो, गुरुके वचन मान आत्माराम और फलाहारी होके तुह्मारी कृपासे इस दुःखसे कब छूटूंगा ? कि, जो दुःख निरन्तर सब मनुष्योंकी सेवा करनेसे मुझे हो रहा है ॥ ९० ॥

शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः
सारङ्गाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ।
येषां निर्झरमम्बुपानमुचितं रत्येव विद्याङ्गना
मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥ ९१ ॥

( सं० टी० ) येषां शैलशय्यादि वृत्तिरस्ति ते त्वतिधन्या इत्याह–शय्येति । येषां पुरुषाणां एवंविधा स्थितिः तान् अहं एवं मन्येऽत एव ते परमेश्वराः । सा का स्थितिः ? शैलशिला शय्या शयनम् । गिरिगुहा पर्वतदरी गृहम् । तरूणां त्वचः वस्त्रम् । सुहृदः सारंगाः । ननु निश्चितं क्षितिरुहाणां वृक्षाणां कोमलैः फलैर्वृत्तिः । निर्झरमंबुपानम् । एवं निश्चयेन रत्येव सहोचिता अंगना इव विद्या येषामिति ते ईश्वराः । यैः शिरसि सेवांजलिर्न बद्धः न कृतः । शय्यावस्त्रादिविषयान्परित्यज्य अरण्ये स्थित्वा भगवदाराधनमेव कर्तव्यमिति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९१ ॥

( भा० टी० ) पर्वतकी चट्टान जिनकी शय्या और कंदरा घर है; वृक्षोंके वल्कलही वस्त्र और बनके हिरनही मित्र हैं; वृक्षोंके कोमल फलादि भोजनसे जीवन और झरनेका स्वच्छ जलपान है तथा विद्यारूपी स्त्रीहीसे प्रीति है, उन पुरुषोंको हम परमेश्वर मानते हैं कि जिन्होंने सेवा करनेके हेतु औरोंको प्रणाम न किया ! ॥ ९१ ॥

सत्यामेव त्रिलोकीसरिति हरशिरश्चुम्बिनीविच्छटायां
सद्वृत्तिं कल्पयन्त्यां वटविटपभवैर्वल्कलैः सत्फलैश्च ।
कोऽयं विद्वान् विपत्तिज्वरजनितरुजाऽतीव दुःखासिकानां
वक्त्रं वीक्षेत दुःस्थे यदि हि न बिभृयात्स्वे कुटुम्बेऽनुकम्पाम् ॥९२॥

( सं० टी० ) विपत्तिज्वरग्रस्ते कुटुंबे स्पृहां कृत्वा दुःखेन स्थित्यपेक्षया अत्यंतसुखदो गंगातीरे निवासः श्रेयानिति कथयन्नाह-सत्यामिति । हि निश्चितं यदि चेत् दुःस्थे स्वकीये कुटुंबे अनुकंपां कृपां न बिभृयात् । यत्तदोर्नित्यसंबन्ध इति न्यायात् । तदा कोऽयं विद्वान् अतीव दुःखासिकानां नारीणां वक्त्रं वीक्षेत ? अपितु कोऽपि न । कया ? विपत्तिज्वरस्तेन जनिता रुक् तया । कस्यां सत्याम् ? त्रिलोकीसरिति गंगायां सत्यामेव । किंभूतायां सरिति हरशिरश्चुंबिनीविच्छटायां हरशिरश्चुंबिनो ईश्वरमस्तकस्य रमणी नीविच्छटा कटिवस्त्रग्रन्थिर्यस्याः सा । पुनः किंभूतायां त्रिलोकीसरिति ? सद्वृत्तिं सदा वरं कल्पयंत्यां प्रेरयन्त्याम् । कैः सत्फलैः । किंभूतैः सत्फलैः वटविटपभवैर्वटवृक्षोद्भवैः । स्रग्धरा वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९२ ॥

( भा० टी० ) दुःस्थ ऐसे अपने कुटुंबमें कृपा करनेमें तत्पर न रहे, तब कौन विद्वान् है कि, जो स्त्रियोंका मुँह देखे ? कभीही नहीं देखे. कैसी हैं वे स्त्रियां कि, विपत्तिरूपी ज्वरसे जनित रोगरूपी हैं. किसके रहनेसे ? त्रिलोकमें जो पूज्य ऐसी गंगाजी तिसके. गंगाजी कैसी हैं कि, महादेवके मस्तकपर रहकर सुशोभित है कटिवस्त्र जिनका, और कैसी कि, वटवृक्षके वल्कलादिका आश्रय करके सद्वृत्तिके विषे प्रेरणा करनेवाली है ॥ ९२ ॥

उद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः
कौपीनावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ।
आसन्नं मरणं च मङ्गलसमं यस्यां समुत्पद्यते
तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते ? ॥ ९३ ॥

( सं० टी० ) काशीनिवासस्य श्रेष्ठत्वमाह श्लोकद्वंद्वेन-उद्यानेष्विति । तां काशीं परिहृत्य परित्यज्य, हंत इति खेदे, विबुधैः किं अन्यत्र स्थीयते ? अपितु न । यस्यां काश्यां उद्यानेषु विचित्रभोजनविधिः । चान्यत्तीव्रातितीव्रं तपः । चान्यत् सुवस्त्रं कौपीनावरणं मंडनम् । चान्यद्यस्यां अमितं भिक्षाटनम् । यस्यां काश्यां मंगलसमं आसन्नं मरणं समुत्पद्यते । तां काशीं मुक्त्वा कथं अन्यत्र स्थीयते इति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९३ ॥

( भा० टी० ) उपवनोंमें नानाप्रकारके भोजन बनाके खानाही जहां कठिनसे कठिन तप और लंगोटी पहिरनाही परम सुन्दर वस्त्र और भीख मांगनाही जहां भूषण है और मृत्यु आनाही जहां परममङ्गल-को उत्पन्न करता है ऐसी काशीजीको छोड़ पण्डितलोग अन्यत्र क्यों बसते हैं ? ॥ ९३ ॥

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि
स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-
र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ९४ ॥

( सं० टी० ) नायमिति । ते तव अयं समयः कालो न । अधुना नाथः स्वामी रहस्यमेकान्तं यथास्यात्तथा निद्राति । यदि स्थित्वा द्रक्ष्यति तर्हि प्रभुः कुप्यति इति पूर्वोक्तप्रकारेण येषां द्वारेषु वचो वाक्यं 'श्रूयते' इति शेषः । रे चेतस्तान् प्रभूनपहाय निर्दौवारिकनिर्दयोक्त्यपरुषं निर्गतो दौवारिको यस्मात् तत् निर्दौवारिकं प्रतीहाररहितं निर्दयोक्त्या कठोरोक्त्याऽपरुषः यस्मिन् तन्निर्दयोक्त्यपरुषं निर्दौवारिकं च तत् निर्दयोक्त्यपरुषं च निर्दौवारिकनिर्दयो-क्त्यपरुषम् । निःसीमशर्मप्रदं सीमारहितं सर्वसौख्यं प्रददातीति अतिनिर्मलसौ-ख्यदायकम् । एवंविधं विश्वेशितुः विश्वेश्वरस्य देवस्य भवनं गृहं याहि गच्छ । राजद्वारापेक्षया काश्यां विश्वेश्वरद्वारसेवनमेव परमकल्याणकारकमिति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९४ ॥

( भा० टी० ) "अभी समय नहीं, महाराज एकान्तमें बैठे कुछ विचार कर रहे हैं, अभी सोते हैं, ड्योढीपरसे उठो, तुम्हें बैठे देखेंगे तो प्रभु हमपर क्रोध करेंगे" ऐसे वचन जिनके द्वारपर द्वारपाल बोलते हैं उन्हें त्यागकर हे चित्त ! विश्वेश्वरकी शरणमें जा. जिनके द्वारपर कोई रोकने-वाला नहीं और जहां निर्दय और कठोर वाक्य सुननेमें नहीं आते, इसीसे वह द्वार अमित सुखदायि है ॥ ९४ ॥

प्रियसखि विपद्दण्डव्रातप्रतापपरंपरा-
तिपरिचपले चिन्ताचक्रे निधाय विधिः खलः ।
मृदमिव बलात्पिंडीकृत्य प्रगल्भकुलालवद्
भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ ९५ ॥

( सं० टी० ) संसारेऽतिखिन्नः कश्चित्पुरुषः स्वप्रियां स्त्रीं संबोध्य दैवकृतेर्दुर्ज्ञेयत्वमाह–प्रियसखीति । हे प्रियसखि ! खलो विधिः पराङ्मुखो दैवः नो जानीमः अत्र इदानीं किं विधास्यति । अयं विधिः चिंताचक्रे निधाय बलात्पिंडीकृत्य मनो भ्रमयति । किंभूते चिंताचक्रे ? विपद्दण्डव्रातप्रतापपरंपरातिपरिचपले, विपद्दण्डव्रातस्य या प्रतापपरंपरा, तयाऽतिपरिचपलं तस्मिन् । मनः कामिव मृदमिव । विधिः क इव प्रगल्भकुलालवत्, यथा प्रगल्भकुलालः मृदं मृत्तिकां बलात् पिण्डीकृत्य चक्रे निधाय भ्रमयति । एतावता विपरीतं विधेः विलसितं कोऽपि न वेत्तीति भावः । हरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९५ ॥

( भा० टी० ) हे प्रियसखि ! यह दुष्ट विधाता अब न जाने क्या करेगा ? क्योंकि बलात्कारसे चिंताचक्रमें मेरे मनको भ्रमाता. कैसा है वह चिंताचक्र कि, जिसके फिरानेवाला विपत्तिरूपी दंड कि, जिसकी चपलताके विषयमें परंपरा प्रसिद्ध है. उसमें मेरे मनको जैसे कुलाल (कोंहार) मट्टीका पिंड बनाय अपने चाकपर रख फिराता है, तैसे यह विधि घुमाकर क्या करना चाहता है सो हम नहीं जान सकते ! ॥ ९५ ॥

महेश्वरे वा जगतामधीश्वरे
जनार्दने वा जगदन्तरात्मनि ।
तयोर्न भेदप्रतिपत्तिरस्ति मे
तथापि भक्तिस्तरुणेन्दुशेखरे ॥ ९६ ॥

( सं० टी० ) वस्तुतः हरिहरयोर्भेदप्रतिपत्तिर्न तथापि विशेषतः चंद्रशेखरे भक्तिरस्तीत्याह–महेश्वरे वेति । मे मम महेश्वरे वाऽथवा जनार्दने वासुदेवे वस्तुतः भेदस्य प्रतिपत्तिर्नास्ति । किंभूते महेश्वरे ? जगतामधीश्वरे त्रिभुवन-

स्याधिपतौ । कीदृशे जनार्दने ? जगदन्तरात्मनि । जगतां विश्वत्रयाणां अन्तरात्मा जगदन्तरात्मा तस्मिन् । उभयोर्देवयोर्मे मम चेतस्यन्तरं नास्ति । एवं भवामि तथापि तरुणेन्दुशेखरे श्रीमहेशे मे भक्तिरस्तीत्यर्थः । वंशस्थं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९६ ॥

( भा० टी० ) जगदीश्वर महेश्वर अर्थात् शिव और जगदात्मा जनार्दन अर्थात् विष्णु इन दोनोंमें मुझे कुछ भेदबुद्धि नहीं, तथापि जिनके भालमें चंद्र विराजमान है उन्हीं शिवजीमें हमारी प्रीति है ॥ ९६ ॥

रे कंदर्प करं कदर्थयसि किं कोदण्डटङ्कारितै
रे रे कोकिल कोमलैः कलरवैः किं त्वं वृथा जल्पसि ।
मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं
चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ ९७ ॥

( सं० टी० ) शिवध्यानतत्परे पुरुषे कंदर्पादीनां व्यापारस्य विलक्षणफलत्वमाह–रे कन्दर्पेति । कन्दर्प रे कोदण्डटङ्कारितैः करं किं कदर्थयसि । रे रे कोकिल ! कोमलैः कलरवैः पञ्चमस्वरैः किं त्वं वृथा जल्पसि । हे मुग्धे ! तव कटाक्षैरलं पर्याप्तम् । किंभूतैः कटाक्षैः ? स्निग्धाः स्नेहार्द्राः विदग्धाः कार्यकरणे निपुणाः । मुग्धाः सुन्दरा मधुराः प्रियाः, तैः । पुनः किंभूतैः ? लोलैश्चञ्चलैः । भवतां पूर्वोक्तानां कृतं निखिलं अपि व्यर्थम् । कस्माच्चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते । चुम्बितं चन्द्रचूडस्य महेशस्य चरणध्यानामृतं येन तत् चुम्बितचन्द्रचूडचरणध्यानामृतम् । शिवध्याननिष्ठे मयि मन्मथादिभिः क्रियमाणाः सर्वे यत्ना निष्फला इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ९७ ॥

( भा० टी० ) अरे कामदेव ! धनुष आदि खैंचके तू अपने हाथको वृथा परिश्रम क्यों देता है ? हे कोयल ! कोमल और मधुर सुरसे वृथा तू क्यों टहूका दे रहा है ? हे मुग्धे ! ये तेरे चिकने, चतुर, सुहावने, प्यारे और चंचल नेत्रकटाक्षोंका चलाना अब बस कर; क्योंकि मेरा चित्त महादेवजीके चरणोंके ध्यानरूप अमृतमें रहता है; तस्मात् ये तुम्हारे सबोंके उपाय व्यर्थ हैं ! ॥ ९७ ॥

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
निश्चिन्तं सुखसाध्यभैक्ष्यमशनं शय्या श्मशाने वने।
मित्रामित्रसमानताऽतिविमला चिन्ताऽतिशून्यालये
ध्वस्ताशेषमदप्रमादमुदितो योगी सुखं तिष्ठति ॥ ९८ ॥

( सं० टी० ) कौपीनमिति । योगी सर्वसंगपरित्यागी सुखं तिष्ठति । किंभूतो योगी ? ध्वस्ताशेषमदप्रमादमुदितः, ध्वस्ता निराकृता अशेषाः मदप्रमादास्तैर्मुदितः । कीदृशी कन्था पुनः तादृशी पूर्वोक्ता शतखण्डजर्जरतरा निश्चितं अशनम् । किम्भूतं अशनम् ? सुखसाध्यभैक्ष्यं सुखेन साध्या एवंविधा या भिक्षा तत्समुत्पन्नम् । अन्यच्च शय्या श्मशाने वनांते । ययापि मित्रामित्रसमानता मित्रं च अमित्रं च मित्रामित्रे तयोः सादृश्यं सामान्यं यस्याः । अथ पश्चात् शून्यालये अतिविमला निर्मला शुद्धा ध्यानलक्षणा चिन्ता । अतः कारणात् योगी नित्यमुक्तः संसारे सुखं तिष्ठति । योगाभ्यासपूर्वकं भगवद्ध्यानैकतत्परस्य योगिनः शतखंडजर्जरकौपीनादिभिश्चित्तवैकल्याभावात्सुखेन स्थितिर्भवतीति भावः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९८ ॥

( भा० टी० ) सर्व संगका परित्याग करनेसे योगियोंको सुखकी प्राप्ति होती है. परम जीर्ण लँगोटी, तैसेही हजारों जिसमें टुकडे ज़ड़े हुए हैं ऐसी कथरी, और खानेको जिसमें बिलकुल चिंता करनी नहीं पडती ऐसी भिक्षा, निद्रा करनेको मरघट वा जंगल, शत्रु—मित्रमें समान बुद्धि, शून्यालय जो हृदय तिसमें ध्यानविषयक चिंता, इन पदार्थोंका सेवन कर, सब मद प्रमाद दूर होनेके आनंदसें युक्त योगी सुखसे रहता है ॥ ९८ ॥

भोगा भंगुरवृत्तयो बहुविधास्तैरेव चायं भव-
स्तत्कस्यैव कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः ।
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
कामोच्छित्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥ ९९ ॥

( सं० टी० ) क्षणस्थायिनि भोगादिविषये आशां विहाय भगवदाराधनमेव सदा कर्तव्यमिति सूचयन्नाह-भोगेति । रे लोकाः चेष्टितैर्नवनवविकल्पव्यापारैः कृतं पूर्यताम् । यदि चेदस्मद्वचः श्रद्धेयं श्रद्धायोग्यं तदा स्वधामनि स्वकीये शरीरमन्दिरे कामोच्छित्तिवशे कन्दर्पजयार्थं केवलं चेतः समाधीयताम् । किंभूतं चेतः ? आशापाशशतोपशांतिविशदं, आशापाशस्य शतं आशापाशशतं तस्योपशांत्या विशदं निर्मलम् । यतो भोगाः भंगुरवृत्तयः भंगुरा विनश्वरा वृत्तिर्येषां ते । किंभूताः भोगाः ? बहुधा अनेकप्रकारा एव निश्चयेन बहुविधैर्भोगैरयं भवः संसार एव, रे लोकाः तत्तस्मात्कारणात्कस्य कृते परिभ्रमत भ्रमणं कुरुत । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ ९९ ॥

( भा० टी० ) जितने भोग हैं उनकी वृत्ति नाशवान् है, उनके संसर्गसे भव है अर्थात् वारंवार जन्म मरण है, यह जानकरभी हे लोगो ! किसलिये भोगरूपी चक्रमें भ्रमते हो ? ऐसी चेष्टासे क्या फल मिलना है ? यदि हमारे वचनका विश्वास मानो तो कामनाशक शिव स्वयंप्रकाशरूप हैं; उनमें ऐसा चित्त, जो आशापाश छेदन कर शुद्ध हो रहा है, निरन्तर लगावो ॥ ९९ ॥

धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायता-
मानन्दाश्रुजलं पिबन्ति शकुना निःशंकमङ्केशयाः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुषामायुः परिक्षीयते ॥ १०० ॥

( सं० टी० ) गिरिकंदरे निवसतां पुरुषाणां धन्यतामाह-धन्यानामिति । धन्यानां मनुष्याणां एवं स्थित्या आयुः क्षीयते । किंभूताना धन्यानाम् ? गिरिकंदरे निवसतम् । किं कुर्वताम् ? परं ज्योतिः ध्यायताम् येषां धन्यानामानंदाश्रुजलं निःशंकं शंकारहितं शकुनाः पक्षिणः पिबंति । किम्भूताः शकुनाः ? अंकेशयाः उत्सङ्गसमारूढाः । तु पुनरस्माकमधन्यानां आयुरेवं परिक्षीयते । किम्भूतानामस्माकम् ? मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषां, मनोरथैः उपरचिता याः प्रासादवापीतटक्रीडाकाननकेलयस्तासां कौतुकं जुषंतीति मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषः तेषाम् । वृत्तं पूर्वोक्तम् ॥ १००॥

( भा० टी० ) जो पुरुष पर्वतकी कंदरामें रहते और परब्रह्मकी ज्योतिका ध्यान करनेहारे हैं तिनके आनन्दके आंसुवोंका जल पक्षी लोग निडर हो गोदमें बैठकर पीते हैं, और हमलोगोंका तो केवल मनोरथहीके जो मंदिर और बावडी उनके समीप जो क्रीडावन है उसमें कौतुक करतेही आयुष्य क्षीण होता है ! तात्पर्य यह कि, नानाप्रकारकी मिथ्या कल्पनाओंहीमें जन्म व्यतीत होता है, वास्तव कोई मनोरथ सिद्ध नहीं होता !!॥ १०० ॥

आघ्रातं मरणेन जन्म जरया विद्युच्चलं यौवनं
संतोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः ।
लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-
रस्थैर्येण विभूतिरप्यपहृता ग्रस्तं न किं केन वा॥? १०१ ॥

( सं० टी० ) दिष्टवशाज्जन्मादि यद्यत्प्राप्तं तत्तत्सर्वं मृत्युप्रभृतिभिर्ग्रस्तत्वाच्चिरस्थायि न भवतीति श्लोकयुगलेनाह–आघ्रातमिति । एभिः प्रकारैः किं न ग्रस्तं अन्यच्च के जना न ग्रस्ताः । मरणेन जन्म आघ्रातं स्पृष्टम् । धनलिप्सया संतोष आघ्रातः । प्रौढांगनाविभ्रमैः शमसुखं आघ्रातं निरस्तम् । मत्सरिभिर्लोकैर्गुणा आघ्राता विनाशिताः । व्यालैः दुष्टसर्पैर्वनभुव आघ्राताः । दुर्जनैर्नृपाः भूपाला आघ्राता ग्रस्ताः । विभूतिरपि अस्थैर्येण आघ्राता अपहृता । तर्हि कालेन न किं किं नष्टं किं किं न विनश्यति ? अपितु सर्वं नश्यत्येवेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०१ ॥

( भा० टी० ) मृत्युने जन्मको, बुढ़ापाने युवाअवस्थाको, धनकी इच्छाने संतोषको, सुन्दर स्त्रियोंके हावभावने शान्तिसुखको, मत्सरने गुणको, सर्पोंने वनभूमिको, दुर्जनोंने राजाको और चंचलताने धैर्यको ग्रास किया है. योंही इस संसारमें किसने किसको नहीं ग्रास कर रक्खा है ? ॥ १०१ ॥

आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः ।

जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसात्
तत्किं नाम निरंकुशेन विधिना यन्निर्मितं सुस्थितम् ॥१०२॥

(सं० टी०) आधीति । नाम इति संबोधने । तत्किं यन्निरंकुशेन विधिना दैवेन सुस्थितं निर्मितं तद्वद । शरीरे आधिव्याधिशतैरमितमतिशयेन आरोग्यमुन्मूल्यते । तत्र आधिर्मानसी पीडा, व्याधिः रोगसमुद्भवा । चान्यद्यस्मिन् दैवनिर्माणे लक्ष्मीः वर्तते । तत्र स्थाने व्यापदः विपत्तद्वारा इवउद्घाटितकपाटा इव वर्तते । अवश्यं निश्चितं आशु शीघ्रं मृत्युर्जातं जातं उत्पन्नं उत्पन्नं आत्मसात्करोति आत्मायत्तं विधत्ते । अतः अस्य दैवस्य निर्माणे किमपि स्थिरं नास्तीत्यागमः । वृत्तं पूर्वोक्तम् ॥ १०२ ॥

(भा० टी०) सैंकडों मानसिक व दैहिक रोगोंने मनुष्योंकी आरोग्यताको मूलसे उखाड डाला है. जैसे–जहां द्रव्य बहुत होता है वहां विपत्ति द्वार तोड़के आ पड़ती है, जो जो जन्मता है उसे मृत्यु बलात्कारसे अवश्य वश कर लेती है, तो कहो ऐसी कौन वस्तु है कि जिसे निरंकुश विधाताने स्थिर बनाया है ? ॥ १०२ ॥

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भमध्ये
कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः ।
नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोऽप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥१०३॥

(सं० टी०) अस्मिन्संसारे स्वल्पमपि सुखसाधनं नास्तीत्याह–कृच्छ्रेणेति । रे मनुष्या वदत कथयत । यदि चेत्संसारे स्वल्पमपि सुखं किंचिदस्ति । गर्भमध्ये कृच्छ्रेण कष्टेन नियमिततनुभिः संकोचितशरीरैः स्थीयते । किंभूते गर्भमध्ये ? अमेध्यं मध्यं यस्य तदमेध्यमध्यं तस्मिन् । संसारे यौवने विप्रयोगः । किंभूते यौवने कान्ताविश्लेषदुःखव्यतिकरविषमे, कान्ताया विश्लेषः कान्ताविश्लेषस्तस्य योऽसौ दुःखव्यतिकरस्तेन विषमः कांताविश्लेषदुःखव्यतिकरविषमः । तस्मिन्नपि । पुनर्नारीणामवज्ञाऽवगणनं तेन विलसति अपि पुनर्नियतं निश्चितम् । वृद्धभावः यस्मादसाधुः अस्मात्कारणात् संसारे किमपि सौख्यं नास्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १०३ ॥

( भा० टी० ) अपवित्र मलमूत्रके स्थानमें बडे कष्टसे हाथ पैर बँधे-हुए बालअवस्थामें गर्भ बन्दीगृहमें रहता है; फिर युवाअवस्थामें स्त्रियोंके वियोगदुःखसे क्लेशित रहता है; और वृद्धावस्थामें नारियोंसे निरादर पाकर नीचा शिर किये शोचमें पड़ा रहता है, तो हे मनुष्यो! इस संसारमें किंचित्मात्रभी सुख हो सो हमसे कहो ॥ १०३ ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ? ॥ १०४ ॥

( सं० टी० ) शतवर्षपरिमिते चंचले आयुषि किंचिदपि सुखेच्छा नेत्याह–आयुरिति । प्राणिनां सौख्यं कुतः ? कथम् ? नृणां मनुष्याणामायुर्वर्षशतं परिमितम् । तस्यायुषो वर्षशतप्रमाणस्य अर्धं रात्रौ गतं शयनस्य । ततोऽनन्तरं तस्य पञ्चशतः अर्धस्य कदाचिदपि अधिकमर्धमपि बालत्ववृद्धत्वयोर्गतम् । शेषमायुर्व्याधिवियोगशोकसहितं सेवादिभिः कर्मभिर्नीयते । किम्भूते ? जीवे जीवितव्ये, वारितरंगचंचलतरे वारिणः समुद्रस्य तरंगास्तद्वच्चञ्चलतरं वारितरंगचंचलतरं तस्मिन् । एतादृशे जीवे सुखस्यावसरः कुत इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १०४ ॥

( भा० टी० ) प्रथम तो मनुष्यकी आयुष्यही सौ वर्ष प्रमाणवाली होती है. उसमेंसे आधी अर्थात् पचास वर्ष रात्रिको सोनेहीमें व्यतीत होती है; शेष आधीके तीन भाग करो; उसमेंसे प्रथम अंश बालपनकी अज्ञानतामें जाता है, दूसरा वृद्धा (जरा) अवस्थामें जाता है और तीसरा अंश युवावस्थामें; जो बची सो व्याधि, वियोग, दुःख, पराई सेवा, कलह, हर्षशोक, हानि, लाभ इत्यादि नानाक्लेशोंमें व्यर्थ व्यतीत होती है. यदि सौवर्षपर्यंत जीवन हो तौभी खासे सुखके दिन कछु नहीं निकलते; यह तो जलके तरङ्गकी नाईं जीवन है. इसमें प्राणियोंको कहांसे सुख प्राप्त होगा ? ॥ १०४ ॥

ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं
यन्मुंचंत्युपभोगकांचनधनान्येकांततो निःस्पृहाः ।
न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न शक्ता वयम् ॥ १०५ ॥

( सं० टी० ) दुष्करकर्मकारिणो निस्पृहान्विचारवंतः पुरुषानभिनंदन्मनोरथमात्रलब्धेषु धनादिषु इच्छां कुर्वन्तमात्मानं दूषयन्नाह—ब्रह्मेति । ब्रह्मज्ञानविवेकिनः अमला निर्मला धीर्बुद्धिर्येषां ते । अहो इत्याश्चर्ये । दुष्करं तत्कुर्वंति । तत् किम् ? उपभोगान् न भजंति । एवंभूतानि धनान्यपि मुंचंति त्यजंति । अतः एकांततो निःस्पृहा विरक्ताः । वयं तु पुरा न प्राप्तानि, संप्रति अधुना न संति, अग्रेऽपि प्राप्तौ दृढप्रत्ययो निश्चयो नास्ति । एवंभूतानि धनानि त्यक्तुं न शक्ताः । कथंभूतानि धनानि ? वाञ्छामात्रं परिग्रहो येषां तानि वाञ्छामात्रपरिग्रहाणि । नतु प्रत्यक्षाणि । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०५ ॥

( भा० टी० ) ब्रह्मज्ञानके विवेकी, निर्मल बुद्धिमान् और सत्पुरुष यह बडा कठिन व्रत धारण करते हैं कि, उपभोग, भूषण, वस्त्र, चंदन, वनिता, शय्या, तांबूल और धन इत्यादि विषयसामग्री सब त्याग देते हैं और निरन्तर निःस्पृह रहते हैं. हमको तो यह वस्तु न तौ पहिले प्राप्त हुई, न अब प्राप्त है, और न आगे प्राप्त होनेका दृढ़ विश्वास है. यह सब इच्छामात्रसे गृहीत हो रहे हैं; परंतु उन्हेंभी हम परित्याग नहीं कर सक्ते अर्थात् उनकी आशाभी हमसे त्याग नहीं की जाती ! ॥ १०५ ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाऽप्यहितमाचरतीति चित्रम् ॥ १०६ ॥

( सं० टी० ) जरारोगादिव्याप्ते विद्रुद्रति आयुषि प्रतिकूलं कुर्वन्तं पुरुषं शोचयन्नाह—व्याघ्रीवेति । जरा व्याघ्रीव परितर्जयंती भर्त्सयंती अग्रे तिष्ठति । रोगाश्च

शत्रव इव देहं प्रहरंति प्रहारं कुर्वंति । आयुश्च भिन्नघटादिव यथा अंभः उदकं परिस्रवति तथा प्रतिदिनं क्षीयते । एवं सति लोकः अहितं आचरति इति चित्रं आश्चर्यमित्यर्थः । वसंततिलका वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०६ ॥

( भा० टी० ) वृद्धावस्था बाघिनीसी सन्मुख खडी डाट रही है; सब रोग शत्रुओंकी नांई देहपर दण्डप्रहार कर रहे हैं; और आयु प्रतिदिन निकलती जाती है. कैसे? जैसे फूटेहुए घडेसे पानी निकल जाता है. तिसपरभी लोग जिसमें अपना बुरा हो वही काम करते जाते हैं, यह बड़ा आश्चर्य है ॥ १०६ ॥

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ।
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ १०७ ॥

( सं० टी० ) शरीरवैकल्यादिकारिणीं जरां विनिन्दन्नाक्रोशपूर्वकं वदन्नाह गात्रमिति । गात्रं शरीरं संकुचितं संकोचं प्राप्तम् । गतिर्गमनम् । विगलिता नष्टा । दंतावालिः दंतपंक्तिः भ्रष्टा पतितेत्यर्थः । दृष्टिः अवलोकनं नश्यति, अंधत्वं प्राप्तम् । बधिरता कर्णेंद्रियवैकल्यं वर्धते । निकटे उच्चैर्घुष्टमपि न श्रूयते । वक्त्रं लालायते लालास्रावं कुरुते । बान्धवजनः वाक्यं नाद्रियते न सत्क्रियते । भार्या स्त्री न शुश्रूषते सेवां न कुरुते । हा इति खेदे, जीर्णवयसः पुरुषस्य कष्टं दुःखम् । यतः साक्षात्स्वपुत्रोऽपि अमित्रायते, शत्रुवदाचरतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०७ ॥

( भा० टी० ) शरीरमें सिकुरन पड़ गई, गति विगलित हो गई, दांत टूट गये, दृष्टिका नाश हुआ, बधिरता बढ़ने लगी, मुँहमेंसे लाल चूने लगी, बंधुजन बातका आदर नहीं करते, और जोरूभी सेवा नहीं करती! देखो, बड़े कष्टकी बात है कि—'वृद्ध पुरुषका पुत्रभी शत्रुवत् हो जाता है!' १०७

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।

जराजीर्णैरंगैर्नट इव वलीमंडिततनु-
र्नरः संसारांते विशति यमधानीजवनिकाम् ॥ १०८ ॥

( सं० टी० ) इहास्मिन्नगाधे संसारे जन्मप्रभृति मरणांतं सुखलेशोऽपि नास्तीत्याह-क्षणमिति । क्षणं बालो भूत्वा बालः सन् क्षणमपि युवा तरुणः सन्, कामरसिकः कामेषु विषयेषु रसिकः निपुणः । क्षणं वित्तैर्द्रव्यैर्हीनः दरिद्रः । क्षणमपि च परिपूर्णविभवः । पश्चात् जरया जीर्णैः अंगैः वलीमण्डिततनुः वलीभिर्मंडिता आक्रांता तनुर्यस्य । नरः संसारांते मरणसमये यमधानीजवनिकां यमस्य धानीं पुरीं प्रविशति । यथा नटः नानावेषान् दधाति, तथाऽयं प्राणी नानावस्थां दधाति । शिखरिणी वृत्तम् । लक्षणं पूर्वोक्तम् ॥ १०८ ॥

( भा० टी० ) यह मनुष्य क्षणमें बालरूप और क्षणमें युवा रसिक कामरूप, क्षणमें दरिद्र, क्षणमें धनाढ्य, क्षणमें बुढापेवाला कि जिसमें वृद्धपनसे अंग जीर्ण हो जाते हैं, धौले बालोंसे व सिकुड़े चमडेसे भूषित शरीरवाला रूप दिखाकर फिर जो बहुरूपिएकी नाईं यमराजके नगररूपी परदेकी ओटमें छिप जाता है ॥ १०८ ॥

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यांति दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ १०९ ॥

( सं० टी० ) पुण्यारण्ये शिवशिवेति प्रलपतः पुरुषस्य समदृष्टित्वमाह-अहाविति । अहौ सर्पे, हारे मुक्ताफलहारे वा । बलवति रिपौ शत्रौ, सुहृदि हितकरे वा । मणौ वा लोष्ठे मृत्पिंडे पाषाणे वा । कुसुमशयने पुष्पशय्यायां, दृषदि पाषाणे वा । तृणे स्त्रैणे अपत्ये वा । इत्यादिषु मम ? समा दृष्टिर्यस्य समदृशः । दिवसाः कदा यांति गच्छंति । किंभूतस्य मम, क्वचित् कुत्रचित् पुण्यारण्ये स्थित्वा 'शिव ! शिव ! ! शिवे ! ! !' इति नामावलिं प्रलपतः उच्चैः आक्रोशेन वदतः। पूर्वोक्तं वृत्तम् ॥ १०९ ॥

( भा० टी० ) सर्प वा हार, बलवान् शत्रु वा मित्र, मणि और पाषाण, पुष्परचित शय्या वा पत्थरकी चट्टान, और तृण वा स्त्रियोंके समूहमें समदर्शी होकर कहीं पवित्रबनमें 'शिव शिव शिव' इसप्रकार जपते हमारे दिन व्यतीत हों, यही चाहता हूं ॥ १०९ ॥

॥ इति श्रीभर्तृहरिकृतं वैराग्यशतकं संपूर्णम् ॥

---





---

प्रकाशक—**व्रजवल्लभ हरिप्रसादजी, बुकसेलर, कालकादेवी रोड-रामवाडी, मुंबई नं. २.**
इस पुस्तकके टाइटल पेज और पृष्ठ १ से ७२ तक प्रिंटर-श्रीराम सीताराम वर्तकके प्रबंधसे 'शंकर' प्रिंटिंग प्रेस, चौपाटी, दानी बिल्डिंगमें छपा, और पृष्ठ ७३ से १९२ तक प्रिंटर-खंडेराव विनायक पुरंदरे, इन्होंने 'पुरंदरे कं. प्रिंटिंग प्रेस, ५४ कांदेवाडी-मुंबईमें छपाया.